

नमः सच्छ्रवे

# मूर्तिपूजा ।

श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यश्रीमदात्माराम-
भगवत्पादशिष्येण
निखिलशास्त्रनिष्णात–श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य-
श्रीमत्पण्डितस्वामिज्वाहिरदासभगवत्पादा-
धिगतवेदवेदाङ्गविद्येन

**श्रीमदुदासीनपण्डितस्वामिहरिप्रसादेन निर्मिता**

साच

**पौराणिकधर्मसाहाय्यार्थं**

५७ नं. बड़तलाष्ट्रीट कालिकातानगरनिवासिभिर्निखिलदर्शनरसिक-
धौरेयैर्महामान्य श्रीमत् बाबु रूड़मल्ल गोइनका
गुप्त महाशयैः

**मुम्बय्यां**

निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा प्राकाश्यं नीता ।

शाकः १८२४ संवत् १९५८.

मूल्यं ॥.

ओम्

नमः सच्छ्रुवे

# भूमिका ।

**यं साकारं निराकारं चात्मारामं प्रचक्षते ।**
**मुनयस्तं जगद्योनिं विश्वमूर्तिं यजामहे ॥ १ ॥**

इह किलार्यभूमौ भारते वर्षेऽवान्तरभेदेन मतप्राचुर्ये सत्यप्यार्याणामस्ति प्रधानतो मतद्वयं 'मूर्तिपूजा कर्तव्येत्येकम् । न कर्तव्येति द्वितीयम् । तत्राद्यं तावदवलम्बमानाः स्वयं वैदिकंमन्या अपि प्रायशो विज्ञश्रेण्यां पौराणिका इत्याख्यायन्ते । द्वितीयमवलम्बमानास्तु सर्वे मङ्गलमूर्तयः केवलवैदिका इति । न च ते केवलवैदिका अप्यार्यवर्या मूर्तिसामान्यस्य पूजायाः प्रतिषेधमाहुः । परमास्तिकानां तेषां मनोवाक्कायैर्वैदिकं धर्मं पालयतां मातापित्राचार्यादीनां मूर्तेः पूजाया अभ्युदयनिःश्रेयससाधनत्वेनेष्टतमत्वात् । किमुत । प्राणित्वेन कल्पितायाः पाषाणादिमय्याः शालग्रामादिमूर्तेः । तद्यथोक्तमार्यसिद्धान्तेः—

**"पाषाणादिमयी मूर्तिः शालग्रामादिसंज्ञिका ।**
**पूजानर्हा न पूज्येयमार्याणामिति वैदिकाः १"** इति ।

तत्र यश्च तेषां कर्कशतर्कावष्टब्धस्तत्पूजाप्रतिषेधवचनः प्रतिक्षणमुच्चैः कण्ठीरवनादः । स चास्तिकैर्निर्णिनीषुभिरवश्यं श्रवणीयोऽस्ति । न भीरुभिरिव गोमायुभिः कथंचिदुपेक्षणीयः । तस्य च तत्सिंहनादस्य भो एष एव सामान्यतो निर्देशः "पूज्यमेव पूजामर्हति नापूज्यं । पूज्यश्च भगवानीश्वरो वा, तदीयं वा किंचिदिति सर्वत्र निर्णयः । नच मूर्तिरियमीश्वरो विद्यते । जडत्वात् । ईश्वरस्य च चेतनत्वात् । नापि तदीयं वा किंचिन्मूर्तिरस्ति । तथात्वे हि तस्य लक्षणं वा स्यात् । व्याप्त्यधिकरणं वा स्यात् । प्रतिनिधिर्वा स्यात् । प्रतिकृतिर्वा स्यात् । न वाव तल्लक्षणमेषा मूर्तिः । प्रपञ्चस्यैव तल्लक्षणत्वात् । नापि तद्व्याप्त्यधिकरणमियं मूर्तिः । "यः पृथिव्यां तिष्ठन्निति साक्षात्पृथिव्यादीनामेव तद्व्याप्त्यधिकरणत्वेन श्रूयमाणत्वात् । 'यो मूर्त्तौ तिष्ठन्निति विशेषतोऽनभिधानाच्च । नापि तत्प्रतिनिधिरसौ मूर्तिः।

नामादिषु तच्छ्रवणाभावात् । नापि तत्प्रतिकृतिरियं मूर्तिः । ईश्वरमूर्तेरेवाभावात् । तन्मूर्तिसद्भावे वा तस्यैकदेशित्वापाताच्च । नापि मूर्तिपूजनं वैधं नाम । ऋग्यजुःसामाथर्वसु तद्विध्यनुपलब्धेः । नच तत्र विधय एव न सन्ति कुतस्तदुपलब्धिरिति चोद्यं **बाल**चोद्यम् । "संगच्छध्वं संवदध्वं" "दिवं च रोह पृथिवीं च रोह" इत्यादिविधिसहस्रस्य तत्रोपलब्धेः परमार्थतो बालचोद्यत्वात् । नापि "अष्टवर्षं ब्राह्मणमुपनयीत । द्वादशवर्षं क्षत्रियम् । अहरहः सन्ध्यामुपासीत । स्वाध्यायोऽध्येतव्यः । प्रजातन्तुं माविच्छेत्सीः । सत्यं वद । धर्मं चर । मातृदेवो भव । पितृदेवो भव । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि" इत्यादिविधिरिव कश्चित् तद्व्याख्यानभूतेषु ब्राह्मणेषु वा "मूर्तिं ब्रह्मोपासीत, मूर्तिं ब्रह्मध्यायीत, मूर्तिं ब्रह्म विजानीयात, मूर्तिपूजनं कुर्यात्, मूर्तिं पूजयेत्, मूर्तिमर्चयेदि" त्यादिविधिरुपलभ्यते, येनोपनयनादिसंस्कारवन्मूर्तिपूजनमपि वैधं स्यात् । अतएवच मङ्गलाचारनिरतानामार्यमहाशयानां मूर्तिपूजनं धर्मोऽपि न संगच्छते । तस्य सर्वथा तल्लक्षणापेतत्वेन धर्मत्वाभावनिश्चयात् । तथाचोक्तमार्यसिद्धान्ते ॥

**"चोदनालक्षणो ह्यर्थो धर्म इत्याह जैमिनिः ।**
**न भवेच्चोदना यत्र सोऽधर्म इति निश्चितिः १"** इति ।

नच पौराणिको विधिरेवेह प्रमाणमिति शंक्यं, श्रुतिस्मृतिव्यतिरिक्तस्येतिहासस्य वा पुराणस्य वा धर्मे प्रमाणत्वानभ्युपगमात् । अतो देशात्मोन्नतिमिच्छद्भिः श्रीमन्महर्षिस्वामि**दयानन्द**भगवत्पादाशयानुगामिभिर्वैदिकधौरेयैर्दूरतः परित्यक्तव्यं धर्माभासोऽयं मूर्तिपूजनमिति । तं चैतं वैदिकानां कण्ठीरवनादं भागवतोत्तमास्ते भृशमार्द्रहृदयाः पौराणिकार्या निन्दाशब्दमिव कर्णाभ्यां न श्रोतुमुत्सहन्ते । न वा कथंचिच्छ्रूयमाणमप्येनं स्वस्य नैःश्रेयसं मन्यन्ते । प्रत्युत मनोवाक्कायव्यापारैस्तन्मुखमपिधातुं मृषाकुलायमाना इव सहसा प्रत्यवतिष्ठन्ते । तथाच प्रत्यवतिष्ठमानानां तेषां केचित्पौराणिकाग्रजाः कुशलधियः कोपानलदग्धाखिलवचोऽमृतरसाः प्रवृत्तास्तत्सिंहनादोत्तरमुखेन मूर्तिपूजाविधायकानि "मूर्तिपूजा, मूर्तिमार्तण्डः, मूर्तिप्रकाशादिकानि नानाविधानि पुस्तकानि यथामति व्यरचयन् । तानि च नीरसपदवाक्यरचनया रचितत्वेनापूर्णत्वान्न वैदिकानां तेषां चेतांसि तत्र श्रद्धापयन् । नवा तेषामनवस्थितचेतसि मात्रयापि मूर्तिपूजामेनां याथातथ्येना-



# मूर्तिपूजा ।

## श्रीगुरुनानको विजयते ।

यो लीलाधृतसायकः क्षपयितुं धर्मारितुर्कप्रभुं[1]
कीटान्सिंहयितुं हि यः सुनयनामानर्च शक्तिं पराम् ॥
वात्सल्याच्छरणागताय सहसा मुक्तिं ददौ यो महान्
सोऽयं मेऽद्य विराजतां हृदि वरो गोविन्दसिंहो गुरुः ॥ १ ॥

**अथ**—मूर्तिपूजा निरुच्यते । **मूर्त्या पूजा मूर्तिपूजे**त्येतन्निर्वचनम्—मूर्त्योपलक्षितस्य भगवतः पूजा मूर्तिपूजेति तदर्थः—यथाहि पुरतो निर्द्धारितलक्षणलक्ष्माणं दूरतः साक्षात्कृतपक्षिराजं द्रागित्येव देवसदनमुपतिष्ठते देवसदनमेतदिति । किं कारणं । वर्तते पक्षिराजस्तत्रोपलक्षणं—तदुपलक्षितं च देवसदनमिति । तदेवं भगवद्दिदृक्षाऽऽकुलमानसोऽपि गोचरीकृतभगवन्मूर्तिर्भगवन्तमेवोपलक्षितं प्रतिपद्यते । किं कारणम् । भवत्यत्रापि मूर्तिरुपलक्षणं । तल्लक्षणलक्षितं चोमिति । नैतद्विरुद्धं । निराकाराहंयूनामपि मूर्त्युपलक्षितस्यैव पूजाया दर्शनात् । नहि तेऽनुपलक्षितं भगवन्तं मन्तुमर्हाः । कश्च केति प्रश्ने मूकीभाव एवान्यथापद्येत । तन्माभूदिति प्रपञ्चमूर्तिरेव शरणम् । कथं वान्यथाऽन्यथानुपपत्त्या प्रपञ्चमूर्तेः साधयितुमुत्सुकास्ते पूरुषं पुरुषार्थिनो भवेयुरिति साध्वी प्रपञ्चोपलक्षणा मतिः । मूर्तिरेवायं प्रपञ्च इति शक्यवचनम् । मूर्च्छ्यते परिच्छिद्यते यत्तन्मूर्तिरिति लक्षणात् । परिच्छिद्यते चायं प्रपञ्चः । उत्पत्तिमतां तथा दर्शनात् । उत्पादश्चास्याः प्रपञ्चमूर्तेरुपलभ्यते चोपपद्यते चेति न विवादावकाशः । तथाच प्रपञ्चमूर्त्युपलक्षितस्य परमात्मनः पूजा सत्करणं[2] यदा

१. औरङ्गजेब–नामानमित्यर्थः. । २. पत्रैः पुष्पैः फलैस्तोयैर्भोजनाच्छादनादिभिः । सत्करणं समर्च्यानामर्चनं चक्षते बुधाः ॥

न कथंचन विरुध्यते तदा प्रपञ्चैकदेशोपलक्षितस्य तस्य पूजा विरुध्यते इति किमु वक्तव्यम् । नैतद्वक्तव्यम् । सम्यगेवैतत् । कथं तर्हि विभक्तः पन्थाः मूर्तिपूजकाश्चेमे निराकारार्चकाश्च वयमिति । चेतोदोषात्केवलादित्यध्यवसातव्यम् । कुशलाः खलु निराकारवावदूका यन्महतीं मूर्तिमर्चयन्तोऽप्यनर्चितमूर्तिका वयमित्यभिमन्यन्ते । सरलास्तावन्मूर्त्येकदेशार्चका यदञ्चितनिराकारमूर्तयोऽपि निर्गलैस्तैरभिहन्यन्ते । के च ते निराकारानुरक्तचेतसो येऽनर्चिताऽऽकारा अपि निराकारमभ्यर्चयेयुः । नहि बहिष्कृताकारं कुशला अपि केवलं शून्यकल्पं बोद्धुं समर्थाः । पूजायास्तु का कथा । अवमानिताकारास्ते चेदचिदन्तरेण साधयेयुरकलायाश्रित्प्रकृतेरर्चनं बोधनं वा । तदा मन्येऽहं निराकाराभिमानिकानां तेषां पाण्डित्यवैभवं । किमन्यथा विवादफलकेन तेन । तस्मादकिञ्चिदेतत् । किं च भवत्प्रणाल्या तदर्चनं नाम । ध्यानमात्रमिति चेत्तदा तन्निर्वचनमपेक्षते । किं तर्हि निर्वचनम् । तत्रैकतानं प्रवाहिता ध्येयाकारा बौद्धप्रत्यया ध्यानविदो ध्यानमाचक्षते । इष्टं चेदिष्यतां तावत् । नो विपक्षायासः । परं साकारवादः स्थाप्यते । नूनमाकारतामादधत एव ध्यानपादा ध्येयमलंकुर्वते । न विधान्तरतः ॥ तद्यथा पारमर्षं सूत्रं । **योग. । वि. पा. ३ । सू. २—**

**"तत्र प्रत्ययैकतानता ध्यानम्"** २ इति ।

तथाच विप्लवते भावत्को निराकारैकवादमल्ल इत्यवधातव्यम् । तर्हि गुणानुवादमात्रं तदिति चेन्मिथ्या भाष्यते । नहि गुणान्ख्यापयन्तो नरोऽर्चका इत्याख्यायन्ते लोकोपरोधात् । के च ते गुणाः । स्वाभाविका इति चेत्तर्ह्यभिहन्यते सिद्धान्तः सिद्धान्तवत्सलैः । वेदवादिनां तेषां निर्गुणवादस्यैव मुख्यत्वात् । नहि ते स्वाभाविकान्गुणान्सत्कर्तुमुत्का वेदिनो भवितुमर्हन्ति । गुणगुणिभाव एव इति चेत्तदा वक्तव्यं के ते स्वाभाविका गुणाः । न च सर्वज्ञत्वादयो गुणाः स्वभावभूतास्ते सम्यगुदाहरणं । हास्यास्पदत्वात् । आप्तकामत्वादयश्चेन्न । मनोधर्मत्वेन कामादीनां पुरुषधर्मत्वोपचारमात्रत्वात् । तेजस्त्वादयोऽपि नानीदृश औपचारिका इति यावत् । **"तेजोऽसि तेजो मयि धेहि वीर्य्यमसि वीर्य्यं मयि धेहि बलमसि बलं मयि धेहि"** इत्यादि याजुषमन्त्राणामेकोनविंशाऽध्यायिनां भगवतः परमेश्वरस्य विश्वात्मकत्वाभिधानाभिप्रायकत्वात् । वि-

श्वात्मकत्वं च भगवतो विश्वस्य हेतुत्वादनवद्यम् । प्रपञ्चस्त्वधिको **"जन्माद्यस्य यतः"**[1] इति सूत्रे भाष्ये वा **स्नेहपूर्ति** सत्कुर्वेति **वेदान्तवातूला**भिधेऽस्मच्छ्री ६ चरणनिबन्धे वा द्रष्टव्यः । तथाच सर्वे ते स्वाभाविका गुणाः प्रत्युक्ताः । ज्ञानादीनां तु स्वरूपत्वेन निरपेक्षत्वात्प्रश्नानर्हत्वं सुस्पष्टमेव "प्रज्ञानघन एव" इति बहुशः श्रवणात् । सम्बन्धानिरूपणाच्च । स्पष्टं चैत**दार्यसिद्धान्ते** मामके निबन्धे । अस्त्वौपाधिका इति चेत्तर्ह्यागच्छतायमेव राजमार्गः । यतः प्रपञ्चमूर्तेरेवोपाधित्वात् । उपलक्षणं चोपाधिकल्पमेवेति न विचारमपेक्षते । तथाच प्रपञ्चमूर्त्युपलक्षितस्य भगवतः पूजनं यदा भवतां न मूर्तिपूजनं तदा प्रपञ्चैकदेशोपलक्षितस्य तस्य पूजनं मूर्तिपूजनमेवास्माकमित्याश्चर्यमेतदिति कृतं वाचां विसर्गबाहुल्येन बुद्धिमत्सु ॥ १ ॥

**मूर्तौ वा पूजा मूर्तिपूजेति** द्वितीयं निर्वचनम् । मूर्तिमभिव्याप्य मूर्तौ वर्तमानस्य भगवतः पूजा मूर्तिपूजेति तस्यार्थः । व्यापको हि भगवानिति सर्वतन्त्रसिद्धान्तः[2] । नहि कश्चन वादी वा प्रतिवादी वाऽव्यापकं तं मन्तुमीष्टे । परिच्छेदस्य विनाशसमव्याप्तत्वात् । अत एव जीवोऽपि नाऽव्यापक इत्यग्रे विस्पष्टयिष्यते । अस्माकं तु नियम एवैष यद्व्यापक एव मूर्तिमान्भवितुमर्हति नाव्यापक इति । गुणविशेषाश्रयघटादिव्यक्तीनां तु मूर्तित्वेन[3] तद्वत्त्वव्यपदेशानर्हत्वात् । क्वचिन्मूर्तिमत्त्वव्यपदेशस्तु घटादिषु मूर्तिशब्दस्याऽऽकृतिमात्रार्थकत्वादिष्ट एवेत्येषा व्यवस्था । तथा च व्यापकस्य मूर्तिमभिव्याप्य मूर्तौ वर्तमानस्य भगवतः पूजा मूर्तिपूजेति युष्माकमप्यविरुद्धम् । कथम् । भवतामपि व्यापकस्यैव परमात्मनः पृथिव्याद्यभिव्याप्य पृथिव्यादौ वर्तमानस्य पूजाया इष्यमाणत्वात् । तथा च यथा तावकः सिद्धान्तस्तथैव मामकः सिद्धान्त इति सिद्ध एवाविरोधः पुनः किमावयोर्मुधा विवादेन । सर्वकार्याभिघातकत्वात् । एतेन मूर्तिपूजामसहमानास्ते प्रत्याख्यातव्याः, सर्वेषां मूर्तेरेवार्चकत्वात् । न केवलं मूर्तेरर्चका एव विश्वे निराकारिणः, प्रत्युतार्चकोत्तमाः। शालग्रामादिमूर्तीनां तन्मूर्त्यपेक्षया परिमाणतो भूयः कनीयस्त्वात् । तस्मादेतत्साधु मन्तव्यम् । यन्मूर्ति-

---

१. वेदान्त. अ. १ । पा. १ । सू. २ ॥ २. न्याय. अ० १ सू. २८ सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः । ३. न्याय. अ० १ आ. २ सू. ६७। व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ६८ ॥

प्रचारश्चित्तस्थैर्यार्थमेवासीदिति। संप्रति प्रायशः स्वकर्तव्यबुद्ध्यभावेन चित्तस्थैर्यालाभेऽपि तात्कालिकं चेतःप्रसादनं तु दर्शनेनानवद्यमेवेति सर्वमवदातम् ॥ २ ॥

**मूर्तेर्वा पूजा मूर्तिपूजेति** तृतीयं निर्वचनम्। ब्रह्मप्रतीकत्वान्मूर्तेर्ब्रह्मरूपतया पूजा मूर्तिपूजेति तन्निर्वचनार्थः। यथाहि—"मनो ब्रह्मेत्युपासीत" इत्यध्यात्ममथाधिदैवतम् "आकाशो ब्रह्मेति[1]" तथा "आदित्यो ब्रह्मेत्यादेशः[2]" "स यो नाम ब्रह्मेत्युपास्ते[3]" इत्येवमादिषु प्रतीकोपासनेषु मनआदिमूर्तिविशेषाणां ब्रह्मरूपतयोपासनं श्रेयसेऽवकल्पयन्ते वैदिकाः न तत्र विप्रतिपद्यन्ते। किंस्विदिदं कथंस्विदिदमिति। एवमेव भगवन्मूर्तेरपि ब्रह्मरूपतया पूजनं सेवनं वा महते फलायावकल्पयितव्यम्। किं कारणम्। तत्रापि विप्रतिपत्तिहेतोरनुपलब्धेः। न हि मनआदिकं चेतनमचेतना च मूर्तिरिति शक्यवचनम्। दृष्टविरोधापत्तेः। यथाहि मनःप्रभृति पदार्थः स्वतः सत्ता स्फुरति शून्यो भौतिकत्वात्। तथैव मूर्तिरपि। वैलक्षण्ये बीजाभावात्। न च वाच्यं मनआदिषु ब्रह्मदृष्ट्योपासनमनुश्रूयते "मनो ब्रह्मेत्युपासीत" इत्यादि, तेन तत्र कल्पनावकाशो न तथा मूर्ताविति। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' 'पुरुष एवेद ँ सर्वम्' इत्यादि वेदवाक्येषु सर्वशब्दाक्रान्तमूर्तेरपि ब्राह्मेण रूपेणोपासनायाः प्राप्तत्वात्। **"घटेभ्यो नमः" "कुलालेभ्यो नमः"** इत्यादि याजुषमन्त्रेषु घटपटादिमूर्तीनां तथात्वेन नमस्कारोक्तेरुपलम्भाच्च। वक्ष्यते चैतदग्रे विस्तरेण। नचैषाऽतान्त्रिकी कल्पना। तत्रकृतामपि संमतत्वात्। तथा चोत्तरमीमांसायामाचार्यपादाः।

## वेदान्त० अ० ४ पा० १ सू० ५—
## "ब्रह्मदृष्टिरुत्कर्षात्" इति ॥ ५

मनआदित्यादिमूर्तिषु तावदुपासनार्थं ब्रह्मदृष्टिः कर्तव्या। कस्मात्। उत्कर्षात् उत्कृष्टं ब्रह्म चेतनत्वात् तद्दृष्ट्योपासिताः पूजिता वादित्यादिमूर्तयोऽपवर्गफलाय कल्पन्ते। न च वैपरीत्येनेति सूत्रार्थः। यथाहि शास्त्रानुगमनं तथा लोकानुगमनमप्यनुसन्धातव्यम्। लोके तावद्दृष्टपूर्वोऽयं विषयः यदना-

१. छान्दो० प्र० ३ खं० १५ कं० १।
२. ,, ,, ३ ,, १९ ,, १।
३. ,, ,, ७ ,, १ ,, ५।

ढ्योप्याढ्यतमोऽसि विश्वाधिपतिरसि धर्ममूर्ते मानुगृहाणेत्येवंजातीयकैः संस्तूयमानोऽधर्ममूर्तिरपि सम्यक्फलाय पारयते। तद्विपरीतश्च विपरीतायेति। किं कारणम् । दृष्टिरेव कारणम् । दृष्ट्यभावे सृष्टेरप्यभावात् । नच वाच्यं विषमोदाहृतिः 'चेतनोऽसौ पुरुषश्चेतनैः संस्तुतः सम्यक् फलाय शक्त इति शक्यसंभाव्यम्' परं जडा चैषा मूर्तिरीड्यमानापि कथं फलायालमित्यवधार्यते, चेतनस्यैव तथात्वनिर्णयादिति । विभ्रममात्रत्वात् । न हि मूर्तिपूजकानामेष सिद्धान्तः यन्मूर्तिरेव फलं प्रदास्यतीति । आलम्बनमात्रत्वान्मूर्तेः । भगवदुपासनायां वा पूजायां वाऽऽलम्बनमात्रमेषा मूर्तिः । न हि निरालम्बनोपासना वा पूजा वा संविधातुं शक्यते । ज्ञानादिवदुपासापूजयोरपि सालम्बनत्वनियमात् । तथा च सर्वत्र भगवद्बुद्ध्या क्रियमाणोपासना वा पूजा वा भगवदाश्रयैवावगन्तव्या । भगवाँश्च सर्वाध्यक्षत्वात्सर्वस्मै सम्यक् फलं प्रददातीति न किंचिद्विरुध्यते । तद्यथा पारमर्षं सूत्रं ।

**वेदा० अ० ३ पा० २ सू० ३८**

**फलमत उपपत्तेः ३८**

**न्याय० अ० ४ आ० १ सू० १८**

**ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् १८**

इति । तदेवं भगवद्बुद्ध्या भगवन्मूर्तिपूजनमपि नाफलम् । अतिथ्यादिसेवनेष्विव तत्रापि भगवतः परमेश्वरस्यैव फलप्रदातुर्विद्यमानत्वात् । तथा च सिद्धं मूर्तिपूजनं न तावल्लोकाऽननुकूलं । न वा शास्त्रप्रतिकूलं । किं पुनरधिकं जिज्ञास्यते । निराकारवादिनामपि भवतामीदृङ्मूर्तिपूजनस्येष्टत्वादित्यलं बहुना ॥ ३ ॥

**अथवा मूर्तेरिति कर्मणि षष्ठी व्याख्येया ।** तत्र शरीरमाकारो मूर्तिरित्यनर्थान्तरम् । तेन भगवन्मूर्तेरिव मूर्तेः प्रतिकृतेरिति यावत् या पूजा सा मूर्तिपूजेति तुरीयो निर्वचनार्थः ॥ ४ ॥

**तत्र निराकारैकवादिनां प्रत्यवस्थानम् ।** स्यादेतत्सर्वं चेदीश्वरो मूर्तिमान् शरीरीति पूर्वं सिद्धो भवेत् । न चेश्वरो मूर्तिमानित्यस्माकं प्रतिज्ञानम् । कुतस्तरां तदा तन्मूर्तेः प्रतिकृतिः । कुतस्तमां च तदर्चासम्भावना । तस्मान्न च सम्यगेतन्निर्वचनार्थ इति । **तन्न ।** प्रतिज्ञामात्रत्वात् । प्रतिज्ञा ह्येषा भावत्की 'यदमूर्तिरयमीश्वर' इति । न च तत्प्रमाणम् । प्रमाण-

तश्चार्थप्रतिपत्तिं मन्यन्ते वैदिकाः **"प्रमाणतश्चार्थप्रतिपत्तेः"** इत्यार्षा-नुशासनात्। न च प्रतिज्ञा प्रमाणमिति शक्यनिरूपणम्। अर्थासाधकत्वात्। अर्थसाधकं च प्रमाणमिति प्रमाणविदश्चक्षते। तथा चामूर्तिरयमीश्वर इति प्रतिजानतां प्रमाणं वक्तव्यम्। किं तत्प्रमाणम्। येनेत्थं निश्रेयसाय संप्र-तिपद्यन्ते वेदैकशरणकाः। **अथ** प्रत्यक्षं प्रमाणमिति **चेन्न**। विवादाभावप्रसं-गात्। न हि पदार्थनिर्णेतारः प्रात्यक्षिकेऽर्थे जातु विवदन्ते। किं कारणम्। सन्देहाभावात्। यत्र सन्देहस्तत्र वादावतार इत्येषा हि निर्द्धारणा। **"निश्चितौ हि वादं कुरुत"** इति मणिकृतां वचस्त्वाभिमानिकनिश्चय परं वेदितव्यम्। तेन **"सन्दिग्धं विचार्यते"** इति न्यायोपि संगच्छते। तद्यथा सर्वाध्यक्षसिद्धोऽयमात्मपदार्थः न तत्रास्मि वा नास्मि वेति कश्चन सन्दिग्धे। तदपरे वा प्रत्यक्षविषयीभूता घटपटादयः पदार्थाः। न हि तत्रापि वादिनो वा प्रतिवादिनो वा संशेरते। प्रत्युतोभाभ्यां वादिप्रतिवा-दिभ्यामनुमन्यन्ते। किं कारणम्। प्रत्यक्षेणार्थसंप्रत्ययात्। अतएव योग-भाष्यकृतः समाधिपादस्थे द्वात्रिंशत्तमे सूत्रे भाष्ये व्याजह्रुः। **"न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाभिभूयते"** इति। तदेवमी-श्वरमूर्तेरभावश्चेत्प्रत्यक्षविषयः स्यादात्मनीव न कश्चन तत्र विप्रतिपद्येत। सन्दिह्याद्वा। परं दृश्यन्ते तस्मिन्विप्रतिपत्तयः केचनाभिदधते "न च मू-र्तिमानीश्वर" इति। केचित्तु "मूर्तं चामूर्तं च तदभवत्" इति प्रतिजानते। किं तत्र तथ्यं किंवाऽतथ्यमिति निर्णेतुमशक्यं। तस्मात्परमेश्वरमूर्तेरभावो न प्रत्यक्षप्रमाणगोचर इत्यर्थादापद्यते। तच्चावयोरनुकूलमित्युपरम्यते।

**अथ** कस्मादुपरम्यते। मोपरन्तव्यम्। न ह्यस्माभिः केवलं प्रत्यक्षमे-वैकं प्रमाणमभ्युपगम्यते। किं तर्हि। तर्कोऽपि। स चास्माकं प्रबलोऽवलम्बः **"यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर"** इति मानववचनात्। यश्च तर्केण संयुज्यते स च धर्मः यश्च वियुज्यते स चाधर्म इत्यस्मदीया विडम्बना। अत एव च **'तर्कदक्षा आर्याः'** इति लोकसंलापः। मूर्तिमानीश्वर इति तर्केण विराध्यते। यश्च तर्केण विराध्यते। न च तत्प्रमाणेनानुमन्यते। तर्को हि प्रमाणं सहकुरुते। प्रमाणाङ्गत्वात्। अङ्गहीनं च प्रमाणमप्रमाणमेवे-त्याचार्याणां स्थितिः। अतः प्रमाणाङ्गभूतस्तर्कस्तत्त्वज्ञानार्थं वादिप्रतिवादि-भ्यामभ्युपगन्तव्यः। आवश्यकत्वात्। तद्यथा महर्षीणां सूत्रम्।

---

१. न्या० अ० १ सू० ४०।

**"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः"** इति।

**अत्राभिदध्महे।** योऽसौ तर्कोभवद्भिरभ्युपेयते सचापि तर्को यौक्तिको वा स्यादयौक्तिको वेति निर्देष्टव्यम्। तत्रायौक्तिकश्चेदिति निर्दिश्यते। तदा तर्कस्य तस्यानुपादेयत्वं प्रसज्यते। कस्मात्। अभिलाषाविषयत्वात्। न हि लोके जन्मसार्थक्यमीप्सवो महाजनास्तत्त्वान्वेषकाः सन्तोऽयौक्तिकं किंचिदुपाददते। यौक्तिकं वा परिजहति। प्रत्युत प्रतिलोमम्। न च केवलं तर्कविषयमेवैतत्। परं तर्कवद्विश्वेषु लौकिकाऽलौकिकपदार्थेष्वप्ययमेव न्यायो द्रष्टव्यः। अभिलाषोपनीतं हि वस्तुगत्योपादीयते। तदनुपनीतं च परिहीयते। न चायौक्तिकं किञ्चिदभिलाषोपनीतमभिलाषोपनीतस्य वा साधनम्। पुरुषाभिलाषश्च तदुभयविषय एव दृश्यते नानुभयविषय इति। अनुभयश्चायौक्तिकस्तर्कः। तत्कथमभिलाषविषयः स्यात्। कथं वोपादेयतामियात्। किंतर्हि। नाभिलाषविषयः स्यात्। न वोपादेयतामियादिति। तस्माद्यौक्तिकस्तर्को वक्तव्यः। युक्त्या संस्कृतो यौक्तिकस्तदसंस्कृतोऽयौक्तिक इत्याख्यायते। तत्र कीदृग्युक्तिरपेक्ष्यते यया संस्कृतस्तर्को यौक्तिकः संपद्यते। सा तावदनुमानरूपा वा तर्करूपा वा। अनुमानरूपा युक्तिश्चेदिष्यते तदा परस्पराश्रयादयो दोषा उपस्थास्यन्ते। कथं दोषोपस्थानमिति चेच्छ्रोतव्यम्। अनुमानं तावत्प्रमाणमिति निरपवादम्। प्रमाकरणत्वात्। यत्प्रमाकरणं तत्प्रमाणम्। प्रमा तावदनुमितिः तत्करणमनुमानम्। तत्प्रमाणभूतं चानुमानं स्वाङ्गकल्पं तर्कमाकांक्षतीति पूर्वं निरधारि। अन्यथाऽनङ्गस्य तस्य प्रमासाधकत्वमेव न स्यात्। तच्च नेष्टम्। तेनानुमानस्य तर्कापेक्षावश्यकीति व्याहर्तव्यम्। यथा चैतदनुमानं स्वस्वास्थ्यस्येप्सया तर्कमभ्यर्थयते। तथात्मचारिताथ्यलिप्सया तर्कोऽप्यनुमानात्मिकां युक्तिं संप्रार्थयते। तथा च तर्कस्यानुमानाभ्यर्थना तर्कापेक्षितानुमानस्य च तर्कसंप्रार्थनेति परस्पराश्रयो दोषः। आह च **"वृद्धिरादैजिति"** सूत्रे महाभाष्ये भगवान् भाष्यकारः **"इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यंते तद्यथा नौर्नावि बद्धा नेतरत्राणाय भवतीति"**। अथैतद्दोषपरिजिहीर्षया पुरोधावतां तर्कप्रियाणां मूलक्षयहेतुरनवस्थादोषोऽपि त्वरया संमुखायते। मूलस्य रक्षणं च सर्वथापेक्ष्यम्। तद्धाने सर्वस्य हानात्। तस्मान्मूलं संरि-

रक्षिषुभी रयेण यत्न आस्थेयः । यतो निर्यत्नस्य मूलापक्षय इति लोकानामपि वाचोयुक्तिः । अत एव संहिताभागोऽपि ।

ऋ. अष्ट. ७ अ. ६ वर्ग २६ मं. ५

**"यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु । यथा न पूर्वमपरो जहात्येवा धातरायूँषि कल्पयैषामिति"** तथाचानुमानरूपयुक्तौ दोषबाहुल्यसंभावनया मूलसंरक्षणाय शास्त्रीयपथमारुरुक्षूणां "तर्करूपा वा युक्तिरिति" द्वितीयः कल्प एव पाथेयोऽवशिष्यते । तच्चैतद्धट्टकुटी-प्रभातायितम् । कथम् । उच्यते । द्वावेव तावत्तर्कावभ्युपगतौ भवतः । एकश्च प्रथमस्तर्कः यत्प्रतापाद्धवत्सु लोकविश्रुतमेकं दाक्ष्यं विजयते । द्वितीयस्त्वेनेनाभ्यर्थितस्तर्कः । द्वावप्येतावभ्युपगतौ तर्कौ न संतुष्टमानसौ । प्रत्युतात्मसँश्चिकीर्षया तर्कस्तर्क इत्यनवरतं याच्ञापरौ । याचितावपि तर्कौ नान्यौ कौचन । अपि तु तावेवार्हतः । स्वायत्तीकृततर्कद्वयातिरिक्ततर्कयोरनभ्युपगमात् । तौ च न भिद्येते चेदात्माश्रयः । भिद्येते चेदनवस्थेति निगदो न्यायः ।

**अथा**वधीरितयौक्तिकायौक्तिकविकल्पस्तर्को न च यौक्तिकायौक्तिकेति विकल्पित इति चेत्प्रतिजानीध्वे तदा वक्तव्यं कोऽसौ भवदीयस्तर्क इति ।

**तत्र निराकारैकवादिनः प्रत्याहुः ।** मूर्तिमानीश्वर इत्येकः पक्षः । अमूर्तिरयमीश्वर इति द्वितीयः पक्षः । तत्र द्वितीयः पक्षस्तावद्वादिप्रतिवादिभ्यामाद्रियते । वेदतात्पर्यविषयत्वात् । तत्सर्वं **"तत्तु समन्वयात्"** इति सूत्रे भाष्ये विस्पष्टम् । मूर्तिमानीश्वर इत्यवशिष्टः पक्षः । परं स च सन्दिग्धः । 'न च मूर्तिमानीश्वर' इति पूर्वत एव प्रतिज्ञानादसम्भवाच्च । **तत्रैष तर्कः** । अमूर्तिर्निराकार इत्यनर्थान्तरम् । निराकारो भगवानित्यविवादम् । तस्मिन्भगवति निराकारत्वं तावदेकः सहजो धर्मः पूर्वं व्यवतिष्ठते संप्रति मूर्तिमत्त्वमर्थात् साकारत्वमपरो धर्मो व्यवस्थाप्यते। निराकारत्वं साकारत्वं च प्रत्यनीकधर्मौ कथमेकस्मिन् व्यवतिष्ठेयाताम् । न हि कचित्तेजस्तिमिरयोर्वा विषयविषयिणोर्वैकत्र व्यवस्थानमनुभूयते । संभाव्यते वा शुक्लत्वं नीलत्वं चैकाधिकरणमिति । तस्मान्निराकारत्वसाकारत्वधर्मयोर्विरोधस्यानपायान्न च तौ सहावस्थातुं शक्नुतः इति विरुद्धयोस्तयोरेकस्मिन्नधिकरणेऽशक्यावस्थितिरेवास्माकमनुकूलस्तर्कः । तथाच न च मूर्तिमानीश्वर इत्यमला प्रतिज्ञेति । **तन्न ।** अशक्यनिरूपणात् । तथा हि ।

निराकारत्वं साकारत्वं च तमःप्रकाशवद्विरुद्धौ धर्माविति भवतां पक्षः । **तत्रैष विचारः प्रस्तूयते।** यश्चायं निराकारत्वसाकारत्वयोर्विरोधस्तमः-प्रकाशवदुद्भाव्यते स च विरोधः प्रामाणिको वा निष्प्रामाणिको वा । प्रमाणेन सिद्धः प्रामाणिकस्तदसिद्धो निष्प्रामाणिक इत्येषा तान्त्रिकी परिभाषा । तत्र तावन्निष्प्रामाणिकश्चेदुद्भावितो विरोधः तदाऽसन्नेवापद्यते । नच सन् । कथं स सत्त्वमश्नुवीत। कथं वाऽसत्त्वं परिजह्यात्। सत्त्वासत्त्वयोः प्रामाणिकाप्रा-माणिकत्वाभ्यामव्यतिरेकात्। यत्प्रामाणिकं तत्सत् । यदप्रामाणिकं तदसदि-त्येतद्धि व्याप्तवचनम् । प्रामाणिका घटरुचकादयो लौकिकाः तदपरेऽपवर्गा-दयस्तावदलौकिकाः । नच ते जातु सत्त्वमतिवर्तन्ते । नवा प्रमाणविरहिणो नरविषाणादयः क्वचित्सत्त्वं समश्नुवते । किं कारणम् । प्रामाणिकत्वाऽप्रामा-णिकत्वाभ्यां विशेषात् । अयमपि निराकारत्वसाकारत्वयोर्विरोधश्चेदप्रामा-णिकस्तर्ह्यसन्नेव स्यात् । न तावदणुमात्रेणापि नरविषाणादिकक्षामतिशेते । यश्च नरविषाणादिकक्षां नातिशेते । सच किंकुर्यात् । नहि नरविषाणादयो लोके किंचित्कारिणोऽनुभूयन्ते वा ऽभ्युपगम्यन्ते वा । यश्च न किंचित्क-रोति स च निरर्थक एव । नच निरर्थकं निष्प्रामाणिकं चार्थे प्रेक्षकः कश्चि-दुपादित्सते । नवा तदुपादित्सामाचार्य्याः श्रेयसीं मन्यन्ते । कथं मन्येरन् एकश्चायं निष्प्रामाणिकः, निष्प्रामाणिकत्वेऽप्यसन्, असत्वेऽपि निरर्थकः, निरर्थकत्वेऽपि विरोधः, सर्वथा सतां गर्हणीयः । तथाच मीमांसितव्यम् । यश्चेदृशः स चोपादित्सितोऽपि किं फलयेत् । विरोधस्य तस्य सर्वस्वनाशै-कफलकत्वात् । यदा नासौ श्रेयान् नापि श्रेयःसाधनम् । तदा तमेतं शर्मा-पायैकमूलमुपाददानानां भवतां बुद्धिवैभवं किमु वक्तव्यमिति कृतमप्रामाणि-केन तेन ।

प्रामाणिको वा विरोध इति चेन्न । प्रमाणानिरूपणात् । प्रत्यक्षं वानुमानं वा शब्दो वा प्रमाणमित्यावयोरेष्टव्यम् । तद्यथा योगसूत्रं ।

**योग. समाधि वा. सू. ७.**

**प्रत्यक्षानुमानागमाः प्रमाणानीति ।**

**मनुरपि अ. १२ श्लो. १०५ ।**

**“प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् । त्रयं सुवि-दितं कार्यं धर्मशुद्धिमभीप्सता” १०५–इति ।**

अक्षार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तत्राक्षाणि प्रत्यक्षं प्रमाणम् । सन्निकर्षो व्यापारः । यदा सन्निकर्षः तदा ज्ञानं प्रमितिः । तदा हानोपादानोपेक्षाबुद्धयः फलमिति । मितेन हेतुनार्थस्य पश्चान्मानमनुमानम् । अनुमितिरिति यावत् । मितहेतुश्चानुमानं प्रमाणम् । ज्ञानफलं च पूर्ववत् । शब्दप्रमाणमागमः । आप्तोपदेशः शब्दः । तज्जन्यं ज्ञानं शाब्दमिति प्रत्यक्षानुमानागमानां वाच्योऽर्थः । तथाच किंप्रमाणको विरोध इति विशिष्टजिज्ञासोत्पद्यते । युज्यते च । कथं योगः इति चेदित्थम् । प्रमाणमिति प्रमाणसामान्यवचनम् । यादृशं वचनं तादृशमेव ततो ज्ञानमुपजायते इति नियमः । तद्यथा 'प्रमाणसामान्यज्ञानमिति । परं तदपर्याप्तमुत्पद्यते । कथम् । चित्तसन्तोषाप्तये तावत्प्रमाणजिज्ञासा । यावज्जिज्ञासा न तावच्चित्तसन्तोषः । अभिलाषस्य तत्प्रत्यनीकत्वात् । न च सा सामान्यज्ञानेन शाम्यति । तदशान्तौ चानुत्तमसुखफलकश्चित्तसंतोषोऽपि दुर्लभायते । विशिष्टावबोधेन चोपशाम्यति । तदर्थं विशिष्टविषया जिज्ञासा युज्यते । इति युक्ता जिज्ञासा । तदा '**प्रत्यक्षप्रमाणको वाऽनुमानप्रमाणको वा शब्दप्रमाणको** वा विरोध इति युक्तं विभाव्यते । किंप्रमाणकस्तर्हि विरोधः । **प्रत्यक्षप्रमाणको** विरोध इति चेन्न । विचारासहत्वात् **तत्रायं विचारः** किमीश्वरे प्रसक्तयोर्निराकारत्वसाकारत्वधर्मयोर्विरोधः प्रत्यक्षेणाध्यक्षीक्रियते । उत यत्रकुत्रस्थयोर्निराकारत्वसाकारत्वधर्मयोरिति । न तावदीश्वरे प्रसक्तयोरिति युक्तं वचः । परोक्षे धर्मिणि धर्मापरोक्षासंभवेन तन्निरूपितविरोधापरोक्षस्यापि दूरोत्सारितत्वात् । नच भगवतः परमेश्वरस्य प्रत्यक्षमुपपद्यते । तत्राणुतमतया जीवात्मसाधनानां विमुखीभावात् । धर्मिप्रत्यक्षं च धर्मप्रत्यक्षे निमित्तमित्युत्सर्गः । निमित्तापाये नैमित्तकस्याप्यपाय इतीश्वराप्रत्यक्षे धर्मप्रत्यक्षमप्यपायते । प्रतियोग्यनुयोगिधर्मयोरनध्यक्षे तन्निरूपितविरोधोऽपि सुतरामनध्यक्षायते । तस्मादीश्वरे प्रसक्तयोर्निराकारत्वसाकारत्वधर्मयोर्विरोधो न तावदक्षस्य गोचर इति निष्कृष्यते ।

**अथ** यत्र कुत्रस्थयोस्तयोर्धर्मयोर्विरोधः प्रत्यक्षस्य गोचर इति चेत् । **तन्न** । निर्द्धारणाभावात् । नहि यत्रकुत्रशब्दाभ्यां कश्चन निर्द्धारितो धर्मी निर्दिश्यते । सामान्यवचनत्वात् । अनिर्देशे धर्मिणि तद्धर्मयोः सुतराम-

निर्देशान्नच तद्विरोधोऽपि निर्द्धार्यते । विरोधोऽपि चेदनिर्द्धारितो जायते । तदा प्रत्यक्षेण किं प्रत्यक्षीकृतमिति न च विभाव्यते। कथमेनद्विभावयेयुः। विरोधप्रियास्तेहि देशात्माप्रिया इति। बतेत्थं मिथोविरोधं भावयन्तोपि पण्डितंमन्या वेदैकशरणका आर्या इति डिण्डिमायन्ते। वेदस्य भगवत-स्त्वयमादेशः।

**तद्यथा यजुः अ. ३६. मं. १८**

**"दृते दृꣳहमा मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे"** इत्यादि। तद्विपरीताश्चेमे पापाचाराः तस्मादेषु मिथ्याभिशंसकेषु त्वेतत्काठिकं वचः प्रत्युदाह्रियते.

**तद्यथा यजुर्वेदीयकठोपनिषत्. अ. १ वल्ली २**

**"अविद्यायामन्तरे वर्तमानाः स्वयंधीराः पण्डितंमन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः"** इत्यादि । मन्दाक्षं भजध्वमित्यलं प्रासङ्गिकेन बहुना। प्रकृतमनुसरामः। तथाच प्रत्यक्षेण मानेन विरोधस्याप्रत्यक्षीकरणात् नच प्रत्यक्षस्य गोचरो विरोध इति सिध्यति।

**अथा**निर्द्धारितधर्मिणोरेव निराकारत्वसाकारत्वधर्मयोर्विरोधः प्रत्यक्षस्य गोचर इति चेत्। **तन्न**। अधिकाभिधानात्। निराकारत्वसाकारत्वयोर्विरोधः प्रत्यक्षेण परिगृह्यते इत्येतत्प्रकृतम्। तत्र योऽसौ प्रत्यक्षेण विरोधस्य परिग्रहः सच विशेषणतया वा विशेष्यतया वेति विशेष्टुमर्हति । तदेव चाधिकाभिधानमित्यभिधीयते। नचेत्थं बोधवैशद्यार्थं कल्पितयोः पक्षयोर्विशेषणतया विरोधस्य परिग्रह इति पूर्वः पक्षः संप्रपद्यते । दुष्टत्वात्। विशिष्टावबोधोहि प्राचीनेन विशेषणावबोधेन जन्यते इत्येतदसंशयम्। वृद्धपरंपरागतत्वात्। निराकारत्वसाकारत्वे विरुद्धे इति विशिष्टाकाराद्विशेषणं तावद्विरोधः। तदवबोधश्च विशिष्टबोधस्य हेतुरिति निष्कर्षार्थः। तथाच विरोधग्रहपुरःसरो धर्मिप्रतियोगिनोर्निराकारत्वसाकारत्वयोः परिग्रहो वक्तव्यः। सच न युज्यते। धर्मिप्रतियोगिप्रतीतिमन्तरेण विरोधस्य केवलस्य पुरतः प्रत्येतुमशक्यत्वात्। नहि निरपेक्षः कश्चन विरोधो वा

तद्ग्रहनिरपेक्षस्तत्परिग्रहो वा लोकवेदयोर्दर्शनायास्ते। धर्मिप्रतियोगिनिरूपणाधीननिरूपणत्वाद्विरोधस्य। यथाच विशेषणीभूतस्य विरोधस्य परिग्रहे धर्मिप्रतियोगिपरिग्रहापेक्षावश्यकी। तथा धर्मिप्रतियोगिविशेष्यकपरिग्रहेऽपि विशेषणवित्तेरपेक्षावश्यंभाविनी तज्जत्वादिति। तथा चागतोऽतिथिर्नमस्य: परस्पराश्रयो दोष: तेन स्वागतेन भवितव्यमित्याशास्यतेतराम्।

**अथ** विशेष्यतया विरोधस्य परिग्रह इति चेत्। **तन्न**। उपपादयितुमशक्यत्वात्। यत्र हि विशेष्यतया विरोधस्य परिग्रहस्तत्र पक्षप्रतिपक्षभूतयोर्निराकारत्वसाकारत्वधर्मयोर्विशेषणतया परिग्रहो भवतीति निर्वाच्यम्। निराकारत्वसाकारत्वयोर्विरोध इति विशिष्टाकारात्। तत्र किंभूतयोर्धर्मयोर्विरोधविशेषणतया प्रत्यक्षेणोपग्रह:। एकाधिकरणयोर्वा भिन्नाधिकरणयोर्वा। एकाधिकरणत्वपक्षेऽपि यौगपद्येन वाऽयौगपद्येन वेत्येतदुपपादनीयम्। न तावद्यौगपद्येनैकाधिकरणस्थयोर्निराकारत्वसाकारत्वयोर्विरोधविशेषणतया परिग्रह इति शक्योपपादम्। विरोधापलापप्रसङ्गात्। यौ हि धर्मौ मिथो विरुधाते। नच तौ क्वचिदपि धर्मिणि सहासाते। किं पुनरेककालावच्छेदेन। यौ चैककालावच्छेदेनैकस्मिन्धर्मिणि सहावतिष्ठेते। न तौ प्रत्यनीकधर्माविति। तेजस्तिमिरयोस्तथाऽदर्शनात्। यथा हि तेजस्तिमिरयोर्विरोध:। विरुद्धे च तेजस्तिमिरे न जातु यौगपद्येनैकस्मिन्धर्मिणि वर्त्तेते। यत्र हि तेजो विराजते तिमिरं तत्रोदास्ते। तिमिरं च यमधिकुरुते तेजस्तत उपरमते। किं कारणं। विरोधस्य तत्रानपायात्। नहि कश्चित्समुदाचरद्वृत्तिनी तेजस्तमसी समानाधिकरणतया समधिगन्तुमर्हति। विरुद्धयो: सामानाधिकरण्यायोगात्। निराकारत्वसाकारत्वधर्मयोरपि विरोधश्चेदनपाय: स्यात्। तावपि धर्मौ यौगपद्येन नैकस्मिन्धर्मिणि वर्तेयाताम्। निवर्तकस्य विरोधस्य तेजस्तिमिरयोर्विरोधवत्तत्रापि सद्भावात्। अथ चैककालावच्छेदेनैकमेवाधिकरणं तावधिशयाते इति पूर्वपक्ष्यते। तत्र मीमांसा कर्तव्या। यदि ह्येतौ सततं विराध्नुयाताम्। कथं यौगपद्येनैकमेव स्थण्डिलं चाधिशयीयाताम्। नहि प्रतिद्वन्द्विनोर्धर्मयोरेकत्राधिशयनं पांसुलपादका हालिका अपि प्रतिपद्यन्ते। दृश्यते वा। तथा च क्व विरोध: यद्विशेषणतया यौगपद्येनैकाधिकरणस्थयोर्निराकारत्वसाकारत्वधर्मयो: परिग्रह: प्रतिज्ञायते। कथं वा विरोधानपलाप:। अयमेव हि विरोधापलाप: यत्तयो: सहावस्थानमिति। सहानवस्थानलक्षणस्तावद्विरोध:। स चेतस-

हावस्थानं नोऽपाकुरुते । तदा तदपलाप एव । विरोधो हि विरोधस्य कृत्यं कुर्वन्विरोधायते न चाकुर्वन्नपीति कृतं विरोधापलापहेतुना यौगपद्येन ।

नाप्ययौगपद्येनेति शक्यं वक्तुम् । विरोधानिर्द्धारणप्रसङ्गात् । न ह्ययौगपद्येन वर्तमानयोर्धर्मयोर्विरोधः केनाप्युपायेन निर्द्धारयितुं शक्यते । यौ हि धर्मौ क्वचिदप्यधिकरणे **राबर्टजोबर्टौ यथा दक्षिणस्यां** नच सांमुख्येन कथंचिदासाते । कथं तौ विरुद्धौ निर्द्धार्येयाताम् । समानावस्थितयोरेव वीरयोर्विरोधस्य प्रत्यक्षयितुं शक्यत्वात् । यौ हि भिन्नकालकौ परस्परमसङ्गिनौ स्वाधिकारवशतः समागत्य स्वं स्वं कर्तव्यं कुर्वाते न च तौ विरोधाय संभावयितुमपि शक्येते । निराकारत्वसाकारत्वधर्मावपि तथैवासंभिन्नकालकौ सन्तौ प्रवर्त्तेते चेत् । कथं विरुध्येयाताम् । कथं वा तद्विरोधस्य निर्द्धारणं युज्येत ।

**किंच** यदेतदयौगपद्यमित्यभिधीयते । तदपि स्वाभाविकं वा नैमित्तकं वा । स्वाभाविकत्वेपि निराकारत्वस्य वा साकारत्वस्य वा स्वभावो वक्तव्यः । तत्र तावन्निराकारत्वस्य स्वभावसिद्धमयौगपद्यमिति न च वक्तुं युक्तम् । कादाचित्कत्वप्रसङ्गात् । अयौगपद्यं चेन्निराकारत्वस्य स्वाभाविकमसेत्स्यत् । न निराकारत्वाज्जातु व्ययोक्ष्यत । स्वभावस्य पर्यनुयोगागोचरत्वात् । नहि यो यस्य स्वभावः स तं क्षणमपि परिहातुमुत्सहते । तथा च निराकारत्वस्य साकारत्ववेलायामसमुदाचरद्वृत्तित्वे कादाचित्कत्वमेव प्रसज्यते । तच्च नेष्टम् । सदातनतो निराकारत्वस्य भगवति लब्धात्मकत्वेन वादिप्रतिवादिभ्यामङ्गीकारात् । तेन निराकारत्वस्यैतदयौगपद्यं स्वाभाविकमिति रिक्तं वचनम् ।

**अथ** साकारत्वस्य स्वभावोऽयौगपद्यमितिचेत् । **तन्न ।** अनिष्टप्रसङ्गात् । निराकारत्वं हि भवतां सर्वथेष्टम् । साकारत्वं चानिष्टम् । तच्च साकारत्वं निराकारत्वेन सार्धं कुत्रापि वर्तयितुं नार्हतीति यौष्माकीणः सिद्धान्तः । संप्रत्ययौगपद्यं चेत्साकारत्वस्य स्वाभाविकं सेत्स्यति तदा सर्वदा निराकारत्वभामिन्यालिङ्गनाभावेऽपि साकारत्ववीरस्य कादाचित्कस्तत्सहवासस्तु भविष्यत्येव । निराकारत्वेन साकारत्वस्यैकाधिकरणताया मयौगपद्यस्य स्वभावेनाप्तत्वात् । यश्चैष स्वभावाप्तः सहवास इति । सोऽयं सिद्धान्तविरोधः । यश्च सिद्धान्तविरोधः स एवानिष्टः प्रसङ्ग इति ।

**अथ** साकारत्वमागमिष्यति चेत्प्रत्नमपि निराकारत्वं स्वयमुद्वासयिष्यतीति नानिष्टप्रसङ्ग इति। **तन्न।** निराकारत्वोद्वासस्य सुतरामनिष्टत्वात्। **एतेन** नैमित्तिकमयौगपद्यमिति पक्षोऽपि निराकृतो वेदितव्यः। तत्राप्युदितदूषणराशेः स्वतः साम्राज्यसंभवात्। यत्र हि नैमित्तिकमयौगपद्यं यौगपद्यं तत्र स्वाभाविकमिति नियमः। निमित्तेन जातं नैमित्तिकमिति व्यवह्रियते। यच्च निमित्तेन न जन्यते तत्स्वाभाविकमिति गीयते। नैमित्तिकं चायौगपद्यम्। न च तेन स्वाभाविकं यौगपद्यं निराकर्तुं शक्यते। तस्य स्वभावप्राप्तत्वात्। निमित्ताप्तत्वाच्चास्येति। यथाहि मनुजात्मनामेकजातीयत्वेनाभेदः स्वाभाविको वर्णकृतभेदश्च नैमित्तिक इति शास्त्रविदां स्थितिः। नच तत्र नैमित्तिकेन भेदेन नैसर्गिकोऽभेदोऽपाकर्तुं क्षम्यते। किंकारणम्। प्रकृतिसिद्धत्वेनाभेदस्य नित्यत्वात्। तथा चेदं तस्मात्तथेति। तद्यौगपद्येन वाऽयौगपद्येन वा समानाधिकरणयोर्निराकारत्वसाकारत्वधर्मयोर्विरोधविशेषणतया परिग्रह इति पक्षो निर्दलितो बोद्धव्यः।

**अथ** भिन्नाधिकरणयोर्विरोध इति चेत्तदपि न। दृष्टविपर्ययात्। भिन्नाधिकरणयोर्विरोध इत्येतद्धि दृष्टेन विपर्येति। यच्च दृष्टेन विपर्येति। न तच्छ्रद्धेयं भवितुमर्हति। यद्दृष्टानुसारिणो लोका निराकारिणो वा साकारिणो वा। वन्यानां नागराणां च तेषां व्यवहारतोऽविशेषात्। नहि कश्चनोन्मत्तधीकः स्वरूपतो लब्धप्रतिष्ठौ स्वच्छन्दविहारिणौ कौचनापि धर्मौ विरोधधर्मिकौ भवत इत्यध्यवसातुं साहयति। यश्चानध्यवसितोऽप्यभ्याचष्टे मयाध्यवसितमिति। न च सोऽवधेयवचनो भवितुमर्हति। मृषाभिशंसकत्वात्। भिन्नाधिकरणयोर्विरोध इत्येतन्मृषाभिशंसनम्। अर्थशून्यत्वात्। अर्थमेकं पुरस्कृत्य लौकिकास्तावदभ्यसूयन्ते। भिन्नाधिकरणयोरभ्यसूयायां स्वार्थो वा परार्थो वा नोपपद्यते। उभयोरपि लब्धव्यपाश्रयत्वेन कृतकृत्यत्वात्। गुणानां तावदाश्रयः परमोऽर्थः। यश्च धर्मो दैवेन प्रत्यग्रत एव निरुपद्रवमाधारमाश्नुत स च किमर्थं निष्प्रयोजनकोऽसमानाश्रयेण धर्मेणाभ्यसूयेत। निर्वृत्तकृत्यत्वेनोदासीनैकमूर्तित्वात्। तस्मान्मिथ्यैतद् यद्भिन्नाधिकरणयोर्निराकारत्वसाकारत्वधर्मयोर्विरोधविशेषणतया परिग्रह इति। तथाच निराकारत्वसाकारत्वयोर्विरोधस्योपपादयितुमशक्यत्वान्न तावदक्षप्रमाणको विरोध इति सर्वं चतुरस्रम्॥ १॥

**अथ** माभूत्प्रत्यक्षप्रमाणको विरोधः मा सहतां च विरोधं गोचरीकर्तुं प्रत्यक्षं प्रमाणमिति न नः किंचिच्छिद्यते। विरोधस्यानुमानैकमानगम्यत्वाभ्युपगमात्। अनुमानेन तावद्विरोधं साधयिष्यते। तर्कसचिवत्वादनुमानस्येति। **मैवं मन्ध्वम्।** प्रमितहेतोरसिद्धेः। पक्षधर्मतया हि प्रमितो हेतुः स्वसम्बद्धस्यार्थस्य मापको भवतीति न्यायविदश्चक्षते। यश्चाप्रमितो हेतुर्न च स सिषाधयिषतमर्थं साधयितुं क्षामयति। किं कारणम्। अपर्याप्तत्वात्। सिषाधयिषतस्तावन्निराकारत्वसाकारत्वयोर्वर्तमानो विरोधः स च व्यापकः सन् केनाप्यर्थेन संबद्ध इत्यवश्यं वक्तव्यम्। असंबद्धस्य तस्यानुमानसाध्यत्वानुपपत्तेः। येन च संबध्यते स एव संबन्धाश्रयो हेतुरित्याख्यायते। सतु पक्षधर्मतोपेतोऽसन्दिग्धोऽव्यभिचारी स्वसाध्यसाधनक्षम इति प्रयोक्तार उदाहरन्ति। तदत्रापि तादृशेन हेतुना भवितव्यम्। परं स नोपपादयितुं शक्यते। अशक्योपपादत्वात्। पक्षधर्मो वा विपक्षधर्मो वेत्येतत्तावद्दूरत आस्तां पूर्वं हेतोरेवोपपादनं दुःशकम्। ज्ञातो हि हेतुरुपपादयितुं शक्यते 'हेतुरयमिति। यश्चाज्ञातो हेतुर्न स चोपपादनाविषयः। किं कारणम्। अज्ञातस्य तस्योपपादनागोचरत्वासंभवात्। ज्ञातत्वं च ज्ञानविषयत्वम्। तच्च हेतोरन्तरेण भूयःसहचारदर्शनं नोपपद्यते। भूयःसहचारदर्शनस्यैव "हेतुश्चायं साध्यं चेदमित्याद्यात्मप्रत्ययस्य कारणत्वात्। **"कारणभावात्कार्यभावः[1]। कारणाभावात्कार्याभावः[2]"** इति काणभुजान्वयानन्वयाभ्यां भूयः सहचारदर्शनाभावे हेतु दर्शनमपि नोत्पत्तुमर्हति। भूयःसहचारदर्शनं चान्तरेण साध्यदर्शनं न कथमपि सङ्घाघटीति। महानसे वा चत्वरे वा यत्रकुत्रचिदाभीक्ष्ण्येन साध्यसाधनयोरव्यभिचरितसंबन्धदर्शनस्यैव भूयःसहचारदर्शनत्वात्। साध्यं विरोधः। तस्य दर्शनं प्रत्यक्षम्। तच्चाद्याप्यनिरूपितप्रायमेव। प्रत्यक्षागोचरत्वस्य तस्य विस्तरशो निरूपणात्। तथाच साध्यप्रत्यक्षाभावे भूयःसहचारदर्शनाभावः, भूयःसहचारदर्शनाभावे च हेतुज्ञानाभावः, हेतुज्ञानाभावे च तदुपपादनाभावः इत्यशक्योपपादो हेतुः। अशक्योपपादत्वे च हेतोः पक्षधर्मतया प्रमितत्वमपि न घटते। अघटमाने च प्रमि-

---

१. वै० अ० ४ आ० १ सू० ३

२. वै० अ० १ आ० २ सू० १

तत्वे नितान्तापर्याप्ततया कथं तस्य स्वसाध्यसाधनक्षमत्वमित्यलं भूयसा विस्तरेण ।

**किंच** यश्चायं साध्यमानो विरोधः सोऽपि क्वचित्प्रसिद्धो न वा । न तावदप्रसिद्ध इति वक्तुमुचितम् । अप्रसिद्धविशेषणतापातात् । यस्य हि विशेषणं साध्यं नान्यत्र प्रसिध्यति सचाप्रसिद्धविशेषणः पक्ष इत्युच्यते । नचाप्रसिद्धविशेषणः पक्षः पक्षो भवितुमर्हति । पक्षत्वस्यैव तत्राभावात् । रूपतो वा प्रकारतो वा क्वचित्सिद्धस्य विशेषणतया यत्र धर्मिणि सन्दिह्यमानत्वं तत्त्वं हि पक्षत्वं । तद्यत्र वर्तते सच पक्षः । यत्र निवर्तते सच सपक्षो वा विपक्षो वेत्यन्यदेतत् । निराकारत्वसाकारत्वधर्मावपि विरोधवत्तया संदिह्येतेचेत् तदा पक्षत्वसंपादनाय धर्मयोर्विशेषणीभूतस्य विरोधस्यान्यत्र सिद्धिर्वक्तव्या । दृष्टपूर्वस्यैवार्थस्य सर्वतः संदेहगोचरताया दर्शनात् । यश्चादृष्टपूर्वः पदार्थो न कुत्रापि धर्मितया वा धर्मतया वा प्रसिद्धोऽस्ति न च सोऽन्यत्र संदेहविषयो भवितुमर्हति । अन्यथा शशविषाणादयोऽपि संदिह्येरन् । नह्यप्रसिद्धमूर्तयः शशविषाणादयः संति न वेति कुत्रापि संदिह्यन्ते । किं कारणम् । सन्देहस्य दृष्टपूर्वविषयत्वनियमात् । अयमपि विरोधश्चेन्न च पूर्वं कचिदपि प्रसिद्धोऽस्ति । कथमस्ति न वेत्यन्यत्र संदिग्धः स्यात् । असंदिग्धे च तस्मिन्निराकारत्वसाकारत्वधर्मावपि कथं पक्षत्वमापद्येयाताम् । साध्यवत्तया संदिह्यमानस्यैव पक्षत्वात् । अतएव "सन्दिग्धसाध्यवान्पक्षः" इति वृद्धा अपि समूचिरे । तथाच विरोधस्याप्रसिद्धत्वेऽप्रसिद्धविशेषणकः पक्ष इति सम्यग्दूषणम् ।

**अथ** प्रसिद्धो विरोध इति चेत्तर्हि विवेकुमर्हति क्व प्रसिद्ध इति । विवेकः कर्तव्यः । विवेको ह्यस्य परमः पुरुषार्थः । यदा विवेकं करोति परमपूरुषः संपद्यते । यदा न करोति पशुत्वमापद्यते । विवेकस्यैव पशुपुरुषयोर्विशेषात् । यावद्विवेको न प्रवर्तते तावद्दुःखमनुवर्त्तते । यदा हि विवेकः प्रवर्त्स्यते सर्वं दुःखं निवर्त्स्यते । तस्माद्विवेकं प्रपद्येत । किमर्थं विवेकं प्रपद्येत । यदा ह्यस्य चित्तं विवेकनिम्नं सत्कैवल्यप्राग्भारं भवति नातिदूरं सर्वेऽस्य पाप्मानः क्लेशकर्मविपाकाशयास्तावदेकपदे तूलिकावत्प्रदह्यन्ते न पुनः प्ररोहन्ति । विमुक्तश्च विमुच्यते । तद्यथा परमर्षीणां सूत्रम् ।

**सांख्य० अ० ३ सू० ४**

## "आविवेकाच्च प्रवर्तनमविशेषाणामिति ।

कस्तर्हि विवेकः । विवेचनं विवेकः । विवेचनं पुनः पृथक्करणम् । किमर्थं तावत्पृथक्करणम् । योग्याऽयोग्यपरिच्छेदार्थमिति ब्रूमः । यत्र हि योग्यायोग्यसंग्रहो भवति तत्र विविक्षोत्पद्यते कश्चेह योग्यः कश्चायोग्य इति । तदा विवेकः प्रवर्तते । अथावधार्यते योग्यश्चायमयोग्यश्चायमिति । योग्यमुपाददाना आर्या ऋषयो देवा ईश्वरा इत्याख्यायन्ते विपरीताश्च सुतरां विपरीता इति । अस्ति चेह योग्यायोग्यसंग्रहः । तद्यथा कश्चनात्मानं कामयमानो गुरुमुपसृत्य ब्रूयात् "अधीहि भगवन्नात्मानमिति" । स प्रतिब्रूयाद्य आत्माऽपहतपाप्मा विजरो विमृत्युस्तमुपाददीथा इति । स चेत्थं दीक्षितोऽपि पुनरभ्यस्यंस्तद्विविक्षामापद्यते । कस्तावदात्मशब्दो योऽयमात्माऽपहतपाप्मा विजरो विमृत्युरिति । अथ विविनक्ति । अस्त्यात्मशब्दो देह इत्येकः, पुरुष इत्यपरः । पुनरध्यवस्यति योग्यः पुरुषोऽयोग्यो देह इति । एवं तावन्निराकारोऽपि विवेक्तव्यः । कश्च निराकारशब्दो योग्यः सपक्ष इति यावत् । कश्चाऽयोग्यो विपक्ष इति । यत्र वाव साध्यस्य निश्चयः सिद्धिरिति स सपक्ष इत्युच्यते । यत्रानिश्चयः स विपक्ष इति । कस्तर्हि निराकारशब्दो निराकारो योग्यः स्यादयोग्यः स्यादिति । उच्यते । निराकारशब्दो निराकार इत्येतत्तावदनपवादम् । निराकारः शब्दो वाचकोऽस्य निराकारस्यासौ निराकारशब्दो निराकार इति विग्रहः । स च विविच्यते एकः शब्दः एकः शाब्दोऽर्थ इति । शब्दोऽपि विवेचनीयोऽर्थोऽपि विवेचनीय इति शब्दसंवित्तिपूर्वकत्वादर्थसंवेदनस्य पूर्वं पुनः शब्दो विविच्यते 'समस्तः स्यादसमस्तः स्यादिति । समस्तोऽयं निराकारशब्दो नत्वसमस्त इति । समासेन निर्वृत्तः समस्तस्तदनिर्वृत्तोऽसमस्त इत्युच्यते । कस्तर्ह्यत्र समास इति । तत्पुरुषो वा बहुव्रीहिर्वात्र समासो द्रष्टव्यः । कस्तत्पुरुषः कश्च बहुव्रीहिरिति । **'कुगतिप्रादयः २।२।१८'** इत्येषकस्तावत्तत्पुरुषः । तद्यथा निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः निष्क्रान्तो वाराणस्या निर्वाराणसिः, एवं निष्क्रान्त आकारेभ्यो निराकार इति । **'अनेकमन्यपदार्थे २।२।२४'** इति बहुव्रीहिर्वा । तद्यथा निर्गतरोगो नीरोगः, निर्गतप्राणो निष्प्राणः, एवं निर्गताकारो निराकार इति । कस्तर्हि विशेषः । पूर्वस्मिँस्तावदुपसर्गो निष्क्रमणार्थको भवति । **"निरादयः**

क्रान्ताद्यर्थे पञ्चम्या" इति विशेषाभिधानात्। उत्तरस्मिँश्च प्रतिषेधार्थक इति। तथा चायमपरो विवेकः। यथा हि कौशाम्ब्या निष्क्रान्तः कश्चनान्यः कौशाम्बीं परित्यज्य बहिरुद्गतः पुरुषो वा पशुर्वा निष्कौशाम्बिरित्यभिधीयते, एवमेवात्राप्याकारेभ्यो निष्क्रान्तः कश्चनाकारान्परित्यज्य वर्तमानो निराकारोऽभिधातव्यः। सच गन्धो वा स्याद्ज्ञानं वा स्याच्छब्दो वा स्यादिति। अथ पक्षान्तरे वावाकारः स्वरूपं मूर्तिरित्यनर्थान्तरम्। तद्रहितो निराकार इति। स च शून्यं वा स्यादीश्वरो वा स्यादिति। तत्रैवं विविक्ते शब्दे शब्दार्थे च विचारमारभमाण आचार्यवानयं प्रश्नयति। किं निराकारत्वसाकारत्वधर्मयोर्विरोधस्य सिद्धिं प्रतिजानद्भिर्निराकारैकपक्षकैः क तत्सिद्धिरुदीर्यते। गन्धे वा ज्ञाने वा शब्दे वा शून्ये वा महेश्वरे वेति। न तावद्गन्धे तत्सिद्धिरित्येतच्छक्योत्तरम्। अपातरमणीयत्वात्। यत्किल परीक्षकाणां न जातु दृष्टिपाताभिघातं परिमृष्यति तदपातरमणीयमिति निगद्यते। गन्धे तावद्विरोधस्य सिद्धिरित्येतदपि नच परीक्षकाणां दृष्टिपाताभिघातं परिमर्षति तस्मादपातरमणीयमिति। एको हि लौकिको गन्धोऽपरश्चालौकिक इति। **न तावद**लौकिके गन्धे तत्सिद्धिरित्येतन्मनोहरम्। अलौकिकस्य तस्य लौकिक्या घोणया साक्षात्कर्तुमशक्यतया तद्धर्मिकविरोधस्य सुतरां तदगोचरत्वात्। यश्च न साक्षात्कारस्य गोचरः स च प्रसिद्ध इति किमु वक्तव्यम्। नैतद्वक्तव्यम्। नह्यलौकिको गन्धोऽर्वागदृशां लौकिकानां घ्राणस्य गोचरीभवितुमर्हति। किं कारणम्। अयोग्यत्वात्। यश्चायोग्यः स च कथं योग्यः स्यात्। नह्ययोग्यो योग्यः संपद्यते योग्यो वाऽयोग्य इति। योग्यश्च लौकिको गन्धोऽयोग्यश्चालौकिक इति। अयोग्योऽपि गन्धश्चेद्योग्यो मन्यते तदा पारिभाषिकमेतदासज्यते। यदयोग्य इति। तन्माभूदिति नायोग्यो योग्यः प्रसिध्यति। अप्रसिद्धे च तस्मिन्नाधारकल्पे तान्मात्रिके गन्धे तदाधेयो विरोधोऽप्यप्रसिद्ध एवेति कृतमलौकिकेन।

**नापि** लौकिके तस्मिन्तत्सिद्धिरित्येतद्रमणीयम्। सर्वसाधारणत्वापातात्। यो ह्यर्थः सर्वतः सर्वैरनुभूयते यथा पृथिवीत्वाभिसंबन्धात्पृथिवीति, सोऽयं सर्वसाधारण इत्याख्यायते। लौकिकस्तावद्गन्धः सर्वतः सर्वैरनुभूयते 'सुरभिरयमसुरभिरयमिति। किं कारणम्। लौकिकस्य तस्य घ्राणैकग्राह्यत्वनियमात्। कथमयं नियमः। स्वभावनियमात्। ईदृग्वाव

गन्धस्य स्वभावो यद्यमेव घ्राणेनैकेन गृह्यते नान्यः कश्चन धर्मीति। घ्राणं पुनरविशिष्टं विश्वेषां तद्योगस्याविशेषादिति तद्ग्राह्यो गन्धोऽप्यविशिष्टः सर्वसाधारणीभवितुं योग्य इति वक्तव्यम् । वैषम्यहेतोरनुपपत्तेः । यस्य किल धर्मस्य धर्मिभेदो न स्याद्विशिष्यत अप्युत सर्वसाधारण इति । तेन तद् धर्मीभूतविरोधेनापि सर्वसाधारणेनैव भवितव्यमित्यवश्यं कल्प्यते । कस्मात् । स्फीतालोकमध्यवर्तिनः कुम्भस्य रूपमिव धर्मिणः सर्वसाधारण्ये तद्धर्मसाधारण्यापातस्याप्यावश्यकत्वात् । परमेतद्विरुध्यते । नहि गन्धमनुभवन्तो महाधियस्तटस्था वा मध्यस्था वा निराकारिणो वा साकारिणो वा सुरभ्यसुरभिभेदमिव विरोधमपि कथंचन प्रमिमते "निराकारत्वसाकारत्वयोर्विरोध इति । चेदासीद्विरोधाधिकरणं लौकिको गन्धः तदा धूममिव रसवत्यां कथं न ते प्रमिन्वीरन् । अपितु प्रमिन्वीरन् । परं न प्रमिन्वन्ति "विरोधाधिकरणं गन्धः" इति । किं कारणम् । भेदवद्विरोधस्य तत्रासिद्धेः । अतएवाहुर्वैशेषिके भाष्ये भाष्यकृतः प्रशस्ताचार्याः **"गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः घ्राणसहकारी सुरभिरसुरभिश्च"** इति । तथा च विपक्षो गन्धो न सपक्ष इत्यनाकुलमेतत् ।

**एतेन** ज्ञाने तत्सिद्धिरित्यपि प्रत्युक्तम् । **"अर्थेनैव विशेषो हि निराकारतया धियामि**ति निराकारत्वेऽपि ज्ञानस्यार्थेन साकारत्वोपपादनात् ।

**नापि** शब्दे तत्सिद्धिरिति युक्तमापाद्यते । अनिष्टप्रसङ्गात् । तथाहि यदिष्यते तदिष्टं भव्यम् । यन्नेष्यते तदनिष्टमभव्यमिति । यदेतज्जिहासितमनिष्टमभव्यमकल्याणममङ्गलमनैश्वर्यमिति यावत् । तदैहिकं वा स्यादामुष्मिकं वा स्यादखिलमिह युष्मासु प्रसज्यते । किं कारणम् । विरोध एव कारणम् । कथं विरोधः कारणम् । यत्र विरोधस्तत्राभव्यम् । यत्राविरोधस्तत्र भव्यमिति बहुलं निदर्शनात् । किं तद्बहुलं निदर्शनम् । यथाह स्वकेन भ्रात्रा लङ्काधिपतिर्दशास्यो विरराधेत्येकं निदर्शनम् १ तदपरे वा दुर्योधनप्रभृतयः कौरवाः पाण्डवैः प्रविरेधुरिति द्वितीयं निदर्शनम् २ ततोऽप्यर्वाञ्चः पाञ्चनदाः सिंहा वा सिंहैरिति बहुलं निदर्शनम् ३ । नच बहुलं निदर्शनमेवैतत् । अपितु

साक्षाद्दर्शनम् । क तत्साक्षाद्दर्शनम् । भवत्स्वेव साक्षाद्दर्शनमस्त्यभव्यमस्ति च विरोध इति । अथ भवत्वभव्यं भवतु विरोध इतिचेन्न च युक्तमवधार्यते । विद्याशौर्यवीर्यपराक्रमादिसम्पदामार्याणामकीर्तिहेतोरभव्यस्य मरणादप्यतिरेकात् । तथा चोक्तं भगवद्गीतायाम् ।

**अ० २ श्लो० ३४**

**"संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ।** इति ।

संभावितस्येति जातितात्पर्येणैकं वचनम् । तेन संभावितानामिति वाच्योऽर्थः । पुरातनास्तावदास्माकीना वा यौष्माकीणा वा राजर्षयो वा ब्रह्मर्षयो वा विश्वे ते विद्याशौर्यवीर्यपराक्रमादिसंपदः सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य वेदस्याभिधेयानुष्ठानलब्धतत्वार्थसंविदो निखिलभूतात्मदर्शिनोऽविजुगुप्सिताचरणाः किलाभूवन्निति शास्त्रेतिहासकोविदेषु सुप्रसिध्यति । किं कारणम् । तत्कर्मभेदानां नश्वरेऽपि जगन्मण्डलेऽनश्वरमिवानिशं प्रत्यक्षवदुपलभ्यमानत्वात् । ते ये विश्वविख्यातकीर्तयः खल्वार्यरूपास्तत्सन्तानकल्पा एव नूनं वयं यूयमिति युक्ता संभावना । संभावितानां चार्याभकाणामयुक्ता कीर्तिर्मरणादतिरिच्यत इत्यपि युक्तमभ्युद्यते । तस्माद्धो हातव्यो विरोध एषितव्यं च महोदयं भव्यमिति । वेदैकनिष्ठानां भवतां भव्यस्यैव केवलस्यार्हतमत्वात् । तथाचाह तत्रभवान् वैदिको मन्त्रः ।

**अथर्व. कां० १३ अनु० १ व० ४ मं० ३४**

**"दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं च रोह प्रजां च रोहामृतं च रोह रोहितेन तन्वं संस्पृशस्वेति ।**

परमेतद्विरोधे सद्भवति नच निर्वर्तयितुं शक्यते । किं कारणम् । अवनत्येकहेतुत्वाद्विरोधस्य । विरोधो ह्यन्वयव्यतिरेकाभ्यामवनतेरेवैकं मुख्यं कारणम् । सच लीलया यत्र विभ्राजते तत्रैव पत्येकधर्मा तज्जायावनतिरपि नियमेन संराजते न स्यादुन्नतिरिति । येषां पुनर्महाशयानां स एव विरोधो मुख्यः सन्नित्यं देदीप्यते—तद्यथा—भोजनेऽपि विरोधः शब्देऽपि विरोधः, चेतस्यपि विरोधः, किं भूयसा गन्धेऽपि विरोध इति । कथं स्वतन्त्राचारास्ते सहसा दिवमारोहेयुः, कथं वा देशात्सोन्नतिमीयुः, कथं वा महोदयं भव्यमाप्नुयुरिति मीमांसामपेक्षते । कृता मीमांसा । नहि

कश्चनैकाकी सुशकमपि कार्यं कर्तुं पारयति किं पुनर्दुःशकमिति । सति विरोधेऽशक्यमेतत्सर्वं यद्देशात्मोन्नतिरिति ।

किं तर्हि कर्तव्यं येन दिवमारोहेम, देशात्मोन्नतिं चेयामेति । अविरोधः । कस्मात्पुनरविरोधः कर्तव्यः । धर्मत्वात् । यश्च धर्मः सच यत्नेनोपासितव्यः । यश्चाधर्मः स च यत्नेन जिहासितव्य इति हि शास्त्रविदां स्थितिः । धर्मोऽविरोधः । एकान्तेनाभ्युदयनिश्रेयसहेतुत्वात् । अधर्मो विरोधस्तद्विपर्यासस्य कारणत्वात् । तस्मादविरोध एव परम उपास्यः । अविरोध एव परमो जपः । किं बहुलेनाविरोध एव वाङ्मनःकायैरहर्निशं दिवमारुरुक्षूणां परमं पथ्यमिति । अत एव तत्रभवतां वेदानामप्यादेशः ।

**ऋ० अ० ८ अ० ८ व० ४९ मन्त्र २**

**"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथा पूर्वे सञ्जानाना उपासते ।** इति ।

सङ्गच्छध्वं नाम भोजनेनैक्यं भजध्वम् । भोजनमुद्दिश्य विरोधं मा कुरतेत्यर्थः । कर्मवैजात्येन स्वभाववैजात्यस्याप्यवर्जनीयत्वात् । तथाचोक्तं सांख्यदर्शने । **सां० अ० ६ सू० ४१**

**कर्मवैचित्र्यात्सृष्टिवैचित्र्यम् । इति ।**

संवदध्वं वाचमिति वाग्विरोधस्य प्रतिषेधः, धर्म्यत्वात् । यथाह च भगवान्मनुः **अ० ४ श्लो० १३८**

**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ।** इति ।

सं वो मनांसि जानतामिति मानसविरोधस्य परिहारो बोद्धव्यः । इष्टतमत्वात् । यदाहात्रत्य एव बह्वृचां तुर्यो मन्त्रः ।

**ऋ० अ० ८ अ० ८ व० ४९ मं० ४**

**"समानी व आकूतिः समाना हृदयानि वः ।**
**समानमस्तु वो मनो यथा वः सुसहासति ४** इति ।

अथैवं संगत्य किं कुर्यामेत्यपेक्षायामुत्तरमाहुः । यथा पूर्वे देवा विद्वांसः इदं मया कर्तव्यमिदं त्वया कर्तव्यमिति स्वस्वकर्तव्यभागं जानानाः समुपासते–नाम समुपासत तथैव यूयमपि समुपाध्वमिति समाप्तो मन्त्रार्थः ।

तथाचेत्थं पौनःपुन्येन प्रतिबोधिता अपि यूयं महाधियो न चेद्बुध्यध्वे तदा किं कुर्मः। पुनर्यथास्यात्तथाऽभव्यमेव केवलं प्रसन्नेन हृदयारविन्देन संसेव्यतां भो इत्येकोऽनिष्टप्रसङ्गः।

अथापरोऽनिष्टप्रसङ्गः । योऽयं शब्दः सपक्षीयते सोऽयं स्फोटात्मको वा स्याद्वर्णात्मको वा स्यादुभयथापि तल्लक्षणानि वा तदनुकरणानि वा, लघूनि वा महान्ति वा, ऋजूनि वा तिर्यञ्चि वा, रेखाकल्पानि कानिचिदक्षररूपाणि कल्पनीयानि । किं कारणम् । जगतो व्यवहारस्य तन्निबन्धनत्वात् । शब्दनिघ्नस्तावदखिलो जगद्व्यवहारः। यावन् निराकारस्य तस्य व्यवहारसिद्ध्यर्थानि लक्ष्मणानि वा तदनुकरणानि वा रेखारूपाणि रूपाणि न कल्प्यन्ते । तावत् कुतो व्यवहारसिद्धिः कुतो वा वेदानामादेशः कुतो वा महर्षीणामुपदेशः कुतो वा राज्यप्रबन्धः कुतो वाऽस्मदादीनां वाङ्निबन्धः। किंतर्हि। निराकारतायां सत्यामपि साकारत्वकल्पनाया आवश्यकत्वात् यानि चैतानि रूपाणि तानि निखिलानि निराकारस्य तस्य शरीराणीवेति मन्तव्यम् । तथाच क्व विरोधः कथं चैष सपक्ष इति । यद्ययं शब्दो निराकारत्वसाकारत्वधर्मयोर्विरोधस्याधिकरणं स्यात् । तदा कथमेककालावच्छेदेन निराकारः सन् साकार इव प्रतिभायात् । किं तर्हि। न भायात्। आभाति च । तस्मान्न विरोधाधिकरणं शब्दः अपित्वविरोधोदाहरणमिति । तच्चेष्टमस्माकं नेष्टं च युष्माकम्। अपसिद्धान्तापातादिति द्वितीयोऽनिष्टप्रसङ्गः।

**एतेन** शून्ये तत्सिद्धिरिति पक्षोप्युदस्तो वेदितव्यः। कस्मात्पुनरुदस्तो वेदितव्यः। शब्दवदत्रापि बाधस्य सद्भावात्। त्रयो वाव शून्यस्य मन्तारो ज्यौतिषिका वैशेषिका बौद्धा इति—**तत्र ज्यौतिषिकाः** किल रेखाभेदमात्रं संख्यासर्वस्वं लोके 'सुन्न' इति प्रख्यातं कूपाकारं वा बिन्द्वाकारं वा शून्यमुदाहरन्ति । तच्चेदुदाह्रियते तदा विस्पष्टाऽऽभो बाधः। किं कारणम्। निराकारस्यापि तस्य साकारवदुपलब्धेर्विश्वजनीनत्वात्। विश्वजनीना तावत्साकारवदुपलब्धिः शून्यस्य। विज्ञो वा स्यादविज्ञो वा स्यादखिलोऽपि लोको रेखाभेदमात्रं कूपाकारं वा बिन्द्वाकारं वा संपश्यन्नह्नाय प्रत्येति शून्यमेतदिति। नहि निराकारत्वसाकारत्वधर्मयोर्विरोधे सद्भवति निरुपाख्यमपि शून्यं सोपाख्यमिवोपलब्धुं शक्यते। केवलस्य निरुपाख्यकल्पस्य तस्योपलब्धिविषयत्वाभावात्। निराकारं च

शून्यं साकारमिवोपलभ्यते शून्यमेतदिति । तत्कथं विरोधाधिकरणं कथं वा सपक्ष इति स्वयमेवोह्यम् । कृतं बह्वाम्रेडनायासेन विज्ञेषु इति ।

**तदपरेवावैशेषिकाः "तदभावश्चापवर्गे[1] "नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः[2]"** इत्यादिना सूत्रितं द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां प्रतिषेधात्मकं सर्वथा भावपरतन्त्रं विविधमभावसंज्ञं शून्यमपरं व्याहरन्ति । तच्चेद्व उदाहरणमिति न युक्तमभिधीयते । तत्त्वानवबोधात् । यावद्वावाऽस्य तत्त्वानवबोधो न तावद्युक्ताभिधानमिति । किं कारणम् । अनवबुद्धतत्त्वस्यास्य युक्ताभिधानसामर्थ्याभावात् । नह्यनवबुद्धतत्त्वः कश्चन धीमानपि युक्तमभिधातुमर्हति । किं पुनरन्यः कश्चित्साधारणः पुमानिति ।

तत्त्वं स्वरूपं तच्च नावबुध्यते । कस्मान्नावबुध्यते । विपक्षस्याप्यभावस्य सपक्षत्वेनोद्भावनात् । कथम् । इत्थम् । योयोऽभावः स स सप्रतियोगिक एव वक्तव्यो न निष्प्रतियोगिक इति । किं कारणम् । प्रतीतिरेव कारणम् । भवत्येषा विशिष्टप्रतीतिः "घटाभाववद्भूतलं पटाभाववद्भूतलमिति । नचैषाऽप्रामाणिकीति शक्यं वक्तुम् । बाधाभावात् । या हि प्रतीतिः प्रतीत्यन्तरेण बाध्यते सा चाप्रामाणिकीति । तद्यथा "शुक्तिकायां दुर्वर्णम् गुणे वा भुजङ्गम इति । नचेयं तथा बाध्यते तस्मान्न तथेति । किं तर्हि । प्रामाणिकी । या च प्रामाणिकी सा चार्थस्य साधिका । दृष्टचरत्वात् । प्रामाणिकी चैषा प्रतीतिः "घटाभाववद्भूतलं पटाभाववद्भूतलमिति । तस्मात्तथेति । तथाच धर्मिप्रतियोगिनैरपेक्ष्येणाभावप्रतीतेरननुभवात्सप्रतियोगिक एवाभावो न निष्प्रतियोगिक इति निष्प्रत्यूहम् । कस्मात्पुनः सप्रतियोगिक एवाभावो न निष्प्रतियोगिक इति । तदभ्युपगमात् । वैशेषिकाणां तेषामभ्युपगमस्तदभ्युपगमस्तस्मादपि सप्रतियोगिक एवाभावो न निष्प्रतियोगिक इति । एष हि तेषामभ्युपगमो यत्प्रयुज्यमानो नञ् पदार्थं निवर्तयति नापदार्थमिति । किं कारणम् । अनिवर्त्यत्वात् । पदार्थन्तावन्निवर्तयितुं वा स्थापयितुं वा शक्यते नापदार्थमिति । यश्च प्रागेवापदार्थस्तं कथं निवर्तयेत् कथं वा स्थापयेत् । अलब्धात्मतत्त्वस्य तस्य क्रियाफलशालित्वाभावात् । किं तर्हि । पदार्थमेव प्रतिषेद्धुं वा प्रतिष्ठापयितुं वाऽलं भूयते । किं कारणम् ।

---

१. न्या० अ० ४ आ० २ सू० ४५.

२. वै० अ० ९ आ० १ सू० १०.

प्रतिषेध्यत्वात्प्रतिष्ठाप्यत्वाच्च । पदार्थो द्रव्यं गुणः कर्म सामान्यं विशेषः समवाय इति । तैः प्रयुज्यमानो नञ् तानेव प्रतिषेधेत् । तानेव वा पुनः प्रयुज्यमानः प्रतिष्ठापयेत् । यान्प्रतिषेधेत् यांश्च प्रतिष्ठापयेत् त एव तस्य प्रतियोगिनः तान्येव तस्य विशेषणानि वोपलक्षणानि वेत्यन्यदेतत् । तैरेव विशेषितो वोपलक्षितो वाऽभावो विशिष्टप्रत्ययवेद्यो लोके व्यपदेशार्हो जायते 'घटाभावः पटाभावः शाटिकाभाव इति । यस्मादेवं सर्वथा भावपरतन्त्रो न जातु स्वतन्त्रः सापेक्षत्वात् । तस्मात्सप्रतियोगिक एव न निष्प्रतियोगिक इति । अत एव "**सञ्ज्ञामभावो निरूप्यते नासञ्ज्ञा**मिति प्राचां विशेषोक्तिरपि साङ्गत्यमापद्यते । तथाच कस्य काभाव इति विशिष्टजिज्ञासायां धर्मिप्रतियोगिनोरवश्यं वक्तव्यतया या तावद्धर्म्युक्तिर्या च प्रतियोग्युक्तिः सैव तस्याकारोक्तिः शरीरोक्तिरिति यावत् । सच तेनैवाकारवान् । यश्चाकारवान्स च कथं निराकार एव केवलं संभवेत् । आकारवांश्चाभावस्तस्मान्न निराकारः । किमुत निराकारः सन् साकार इति । तथाच कथं सपक्षः कथं वा न विपक्ष इति कृतबुद्धयो विदाङ्कुर्वन्तु किं नो बहुलेनोदासीनानाम् ।

**निष्प्रतियोगिकाभावं मन्यन्ते नैव तार्किकाः ।**
**सप्रतियोगिके तस्मिन्साकारत्वं प्रसज्यते ॥ १ ॥**

**अथापरे** तावद्बौद्धा वा शून्यमेवैकं जगतस्तत्त्वमापेदिरे । तच्चेत्काम्यं स्यात्कामं काम्यताम् । नास्माभिर्निवार्यते । परमेतदप्युदके निमज्जदसहायानां कुशकाशावलम्बनायितमात्रम् । न तन्मात्रयाप्यतिशेते । किं कारणम् । अकिंचित्करत्वात् । समर्थो वाव किंचित्कर्तुमकर्तुमन्यथा वा कर्तुं समर्थयते नासमर्थ इति । यश्चासमर्थः स च कथं समर्थयेत कथं वा समुपकुर्वीत । नह्यसमर्थस्य कस्यचित्किंचित्कारित्वं लोकतो वा वेदतो वा साक्षात्कारायते येनान्यत्रापि क्वचित्कल्पनावकाशेत । असमर्थो ह किल भारतीयः कुशकाश इति निःसंदेहम् । सच नितान्तौदकस्रोतसा व्यूह्यमानेन विपर्यस्तधिया स्वात्मोपचिकीर्षयावलम्ब्यमानोऽपि किं साहाय्यमाचरेत् । किं वा हितं कुर्यात् । न किमपि कुर्यादिति भावः । यथा चाकिंचनोऽयं कुशकाशस्तथैवादः सौगतं शून्यमपि । असमर्थत्वाविशेषात् । सामर्थ्यं हि निराकारत्वसाकारत्वधर्मयोर्विरोध इति । तेन वर्ज्यं चैतत्सौगतं शून्यमिति

नासमर्थादवशिष्यते। सामर्थ्येन हीनस्यैवासमर्थत्वात्। कथं तद्विरोधेन वर्ज्यमिति चेद्। उच्यते। बौद्धानां खल्वेतच्छून्यम्। तद्यथासमयं वक्तव्यम्। नहि ते शून्यस्य तत्त्वरूपतामाचक्षाणा निर्विशेषमेव केवलं तत्संगिरन्ते। येन विशेषाभावापराधेन साकारत्वाप्रवेशाद्विरोधः प्रसिध्येत्। किमुत। जगतः सत्त्वमप्यातिष्ठन्ते। तच्च सत्त्वं पारमार्थिकं वा स्यात् सांवृत्तिकं वा स्यादित्यन्यदेतत्। तथापि तदुपलक्षितं वा तद्विशेषितं वा शून्यमभ्युपेतव्यम्। नानुपलक्षितं नाप्यविशेषितमिति। किं कारणम्। निर्विशेषस्य तस्याबोधप्रसङ्गात्। यत्तावन्निर्विशेषकं न तच्चावबुध्यते। यच्चावबुध्यते तत्सविशेषकमेवावबुध्यते न निर्विशेषकमिति। निर्विशेषकं चेदवबुध्येत स्वरूपमेवोपहन्यात्। तच्चायुक्तायतेऽनिष्टत्वात्। किं तर्हि। सविशेषकम्। सविशेषकास्तावत्सर्वे पदार्था आ चेश्वराद् च पिपीलिकात्। ते तथा सन्त एवावबुध्यन्ते नातथासन्त इति। प्रकृतमपि शून्यमुपाधितो वा स्वरूपतो वा नो चेद्विशिष्येत। कथं तत्सुबुध्येत कथं वा हेतुभावमुपगच्छेत्। न हि निर्विशेषकं किंचित्तथोपलभ्यते येनेदमपि तथा कल्प्येत। त्रयी हि शब्दानां प्रवृत्तिः जातिपुरस्कृता गुणपुरस्कृता क्रियापुरस्कृतेति। यत्र वाव निर्विशेषमात्रे शून्ये जातिगुणक्रियाणामेकमपि न समन्वयते, शब्दस्तत्र कथं प्रवर्तेत, कथं वा तद्गोचरीकुर्यात्। शब्दाप्रवृत्तौ च कथं तदुपदेशः कथं वा तद्व्यपदेश इति तदन्यतमेनावश्यं भवितव्यम्। तज्जातिर्वा स्याद्गुणो वा स्यात् क्रिया वा स्यादौपाधिकं वा स्यात्स्वाभाविकं वा स्यादिति न निर्बन्धः। किं तर्हि। सद्भावमात्रे निर्बन्धः। कस्मान्निर्बन्धः। तद्बोधैकोपायत्वात्। बोधस्य च मोक्षैकहेतुत्वात्। अत एव यत्र स्वाभाविको जातिगुणक्रियाणां समवायो नाभ्युपगम्यते तत्र सांवृत्तिकेन तेन निर्वोढव्यमिति तैर्थिका अपि सम्यगचकथन्। तदत्र स्वाभाविकासंभवे नैमित्तिकस्तत्समवायो निर्वाच्यः। यच्च तत्र निमित्तं तत्कल्पनैकशरीरं जगदेव, न किंचिदन्यन्मिषदिति। एवं चेत्तदा किंचित्प्रणिधातव्यम्। यन्निर्विशेषकं सद्बुद्धिव्यपदेशान्यथाऽनुपपत्त्या पुनरप्याविद्यकेन जगता संविशेष्यते। तत्कथं विरोधावर्ज्यं, कथं वा निराकारं सन्न साकारमिति। निरतिशयस्य जगदेकाकारस्यैव सद्भावात्। तथा च सद्भावमूर्तिना जगता निराकारं सद्यत्साकारं तत्कथं सपक्षः स्यात् कथं वा

विक्षपो न स्यादिति कृतगुरुकुलपरिश्रमा अवधारयन्तु किं नो भूयस्या शून्यकथाकथयेति ।

**सत्यादिकल्पशून्यत्वाच्छून्यं बौद्धैरुदाहृतम् ।**
**लक्ष्म तस्य जगत्प्राहुस्तत्कथं निर्विशेषकम् ॥ १ ॥**
**एवं बौद्धान्तशून्यानामभ्यधायि सुविस्तरम् ।**
**तत्त्वं विद्वद्भिनोदाय पश्यन्तु निर्मलाशयाः ॥ २ ॥**

**अथ** महेश्वरे तत्सिद्धिरितिचेत् । तन्न । असंबद्धभाषणात् । तथा हि—ईश्वरे तावद्वर्तमानयोर्निराकारत्वसाकारत्वधर्मयोर्विरोधः सिषाधयिषितः संदिग्धत्वात् । नान्यत्र कुत्रचिद्वर्तमानयोरिति । विवादाभावात् । यत्र वाव संदिग्धो विरोधः, स च कथमुदाह्रियेत । यद्वावोदाहरणं न भवति तच्चोदाहरन्तः कथं नासंबद्धभाषाः प्रादुःष्युः । उदाहरणं हि साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्तः । यत्र किल साध्येन धर्मिणा साधर्म्यं तत्प्रयुक्तं तद्धर्मभावित्वं चाध्यवसीयते तदेवोदाहर्तुं पार्यते नान्यदिति । ईश्वरे वर्तमानौ निराकारत्वसाकारत्वधर्मौ विरोधाधिकरणतया सुतरां संदिग्धौ । तत्समानधर्मत्वं तत्प्रयुक्तं तद्धर्मभावित्वं च न तत्रैवाध्यवसातुं शक्यते । संदिग्धे तस्मिन् तद्धर्माध्यवसायायोगात् । नहि यत्र यस्य संदेहस्तत्तत्रैव निश्चेतुं शक्यमिति । स्यादन्यथा सर्वत्र संशयो वा निश्चयो वा तत्समवायो वेति । तन्न भवति । कस्मात् । निश्चीयमाने घटे संशयादर्शनात् । संशयिते वा स्थाणौ पुंसि स्थाणुरेव वा पुमानेव वेति यौगपद्येन निश्चयादर्शनाच्च । किं तर्हि । यत्संदिग्धं तत्संदिग्धमेव नासंदिग्धमिति । प्रमाणप्रवृत्तेः प्राक् तद्विषयाविशयासंभवात् । संदिग्धौ तावदीश्वरीयधर्मौ निराकारत्वसाकारत्वाख्यौ । तदधिकरणं चेश्वरः । स च पक्षकल्प एव नच सपक्ष इति । तथा च कथं निदर्शनं स्यादिति स्वेनात्मना चिन्तयितव्यं किंवा शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनुसूयिभिरिति कृतमस्माकं भूरिविस्तरेण ।

**तदेवं** साध्यप्रसिद्धेः सर्वथाऽनिरूपणात् प्रसिद्धो विरोध इति साहसमात्रं न स्यात्प्रमाणपदवीमारोहति । इत्यप्रसिद्धे तस्मिँस्तद्विशिष्टा प्रतिज्ञापि नोपपद्यते । कस्मात् । निर्देशात्मकत्वात् । साध्यनिर्देशात्मिका हि प्रतिज्ञा । यत्र वाव साध्यं नाद्यापि सुप्रसिध्यति, प्रतिज्ञा तत्र कथमुपपद्येत, कथं

वात्मानमासादयेत । यस्य हि यत्र किंचिदायतते, तत्तदधीनमेवात्मानं लभते, न जातु स्वतन्त्रमिति । साध्याधीनस्तावदात्मलाभः प्रतिज्ञायाः । साप्यन्तरेण साध्यं कथमात्मानमुपलभेत । कथं वा लब्धायुर्भवेत् । यदा खल्वीदृग् वृत्तं 'हेतुरप्यनुपपन्नः साध्यमप्यनुपपन्नं प्रतिज्ञाप्यनुपपन्नत-रेति । तदा कानुमानं क वानुमानचर्चा । सत्यपि वा किंकरिष्यतीति मेधा-विनो निर्णयन्तु । तथा च हेतुसाध्यप्रतिज्ञानां निरूपयितुमशक्यत्वान्नानु-मानप्रमाणको विरोध इति सर्वं निर्दुष्टम् ॥ २ ॥

**अथा**गमप्रमाणको विरोध इति चेत् । न । तादृगागमाभावात् । आ-गमो हि द्विविधः आप्तोक्तोऽनाप्तोक्तश्च । तत्र न तावदनाप्तोक्तः प्रमाणमिति निर्देष्टुं शक्यते । किं कारणम् । प्रामाण्यापेतत्वात् । दृष्टानुमितार्थस्ताव-दागमः प्रामाण्यमश्नुते नादृष्टार्थो नाप्यननुमितार्थ इति । यस्य किलागम-स्यार्थो दृष्टो वा न स्यादनुमितो वा न स्यात्, स च कथं प्रामाण्यमश्नुवीत कथं वाऽप्रामाण्यं प्रत्याचक्षीत । नहि दृष्टविरुद्धं वा हेतुविरुद्धं वा ब्रुवाणः कश्चिदपि प्रतिष्ठानमिह विन्दते, महिमानं वा नापकुरुते । चेदागमोऽप्य-क्षविरुद्धं वा हेतुविरुद्धं वा किंचिद्ब्रूयात् । कथं प्रतितिष्ठेत् कथं वा न विपर्यस्येत् । अयं च दृष्टानुमितार्थको विपरीतार्थकश्चायमिति मूलवक्तृभ्या-मनुगम्यते । यस्तावदाप्तवक्तृकः स च दृष्टानुमितार्थकः । यश्चानाप्तवक्तृकः स च विपरीतार्थक इति । तथा च निराकारत्वसाकारत्वधर्मयोर्विरोधोऽपि दृष्टादिविपरीतार्थकेनागमेन विषयीभूतश्चेत्कथं प्रेक्षावतां चेतांसि श्रद्धापयेत्, कथं वा स्वात्मानं व्यवस्थापयेत् । किं तर्हि । न व्यवस्थापयेत् । तस्मादा-प्तोक्तः प्रमाणमिति वक्तव्यम् । यस्तावदाप्तेनोक्तः स च **वेदोपवेदब्राह्म-णोपनिषदङ्गोपाङ्गस्मृतीतिहासपुराणानी**त्येतावानेव नानधिको नाप्यधिक इति । किं कारणम् । स्वतः परतः प्रमाणत्वेनैतावत एव वेदाद्यागमस्य वादिप्रतिवादिभ्यामुरसि करणात् । चेदत्र कश्चिदागमो निराकारत्वसाकारत्वयोर्विरोधं ब्रूयात् तदा समुपास्महे मङ्गलमूर्तीनां वोऽमङ्गलालापान् । किमन्यथोच्चैः कोलाहलेन श्रेयःपरिपन्थिना । नह्यत्रो-दाहृतागमेषु कश्चनाप्यागमो मन्त्रेण वाऽमन्त्रेण वा पञ्चिकया वा कण्डि-कया वा सूत्रेण वाऽसूत्रेण वा गद्येन वा पद्येन वा निराकारत्वसाकारत्वयो-र्विरोधमवगमयते । न वा तद्भाष्यमाभाषमाणा ऋषयो वा मुनयो वा साक्षाद्वा लक्षणाद्वा विरोधमवगमयन्ते । यदा वाव न विरोधमवगमयन्ते

तदा कथमागमिको विरोध इति विदुषां मन आदध्यात्, कथं वा कश्चन श्रद्दध्यात्। किं तर्हि। न कोऽपि श्रद्दध्यात्। किं कारणम्। निमित्ताभावात्। श्रद्धा ह्युपजनिष्यमाणा प्रामाणिकं निमित्तं कामयते न चाप्रामाणिकमिति। "निराकारत्वसाकारत्वे विरुद्धे" इतीदृगागमानुपलम्भाद्विरोधस्तावदप्रामाणिक एव न स्यात्प्रामाणिक इति। तत्कथं श्रद्धोपजायेत कथं वा मन आदध्यात्। तद्धेतोरेवानुपपत्तेः। तथाचागमप्रमाणको विरोध इत्यपि वार्त्तमेव नावार्त्तमित्यलमागमेन ॥ ३ ॥

**तदेवं** प्रत्यक्षानुमानागमानामशक्यनिरूपणात्तर्कोद्भावितो विरोधः सर्वथा निष्प्रामाणिक एव न जातु प्रामाणिक इति। यश्च निष्प्रामाणिक एव स चासन्नेवेति पुरस्तादवोचामेति सर्वं समञ्जसम् ॥

**किंच** यश्चायं निराकारत्वसाकारत्वयोर्विरोधस्तर्केणोद्भावितः सोऽप्यौत्पत्तिको वाऽनौत्पत्तिको वेति प्रतिवाच्यम्। नच तत्रौत्पत्तिको विरोध इति प्रतिवक्तुं पार्यते। किं कारणम्। समवायाभावप्रसङ्गात्। एवं ह्यसमवायः प्रसज्यते। यत्र वावौत्पत्तिको विरोधः नच तौ कौचनापि धर्मौ यौगपद्येन वाऽयौगपद्येन वा सत्त्वासत्त्वयोरिव धर्मयोरेकस्मिन्धर्मिणि समवेतः। यौ च समवेतः नच तौ तादृग्विरोधिनौ धर्माविलेषा व्याप्तिः। तत्र निराकारत्वसाकारत्वधर्मावपि चेदौत्पत्तिकेन विरोधेन विरोधिनौ विद्येयातां नैकस्मिन्धर्मिणि यौगपद्येन वाऽयौगपद्येन वा समवेयाताम्। विरोधस्य सत्त्वासत्त्वयोरिव तत्राप्यनपायात्। परं तौ समवेत इति व्यापकविरुद्धोपलब्धिः। यथाहि सत्त्वे वर्तमानेऽसत्त्वस्य धर्मान्तरस्यासंभवोऽसत्त्वे वा धर्मे सत्त्वस्य वा धर्मान्तरस्येति। नच तथा निराकारत्वसाकारत्वयोरस्ति कश्चिन्नियमः, यन्निराकारत्वे धर्मे साकारत्वमपगच्छेत्, साकारत्वे वा वर्तमाने निराकारत्वमपद्रवेदिति। किं कारणम्। तदुभयसमवायस्य पूर्वं शब्दादिषूपपादितत्वात्। तथाच व्यापकविरुद्धोपलब्धौ सत्यां व्याप्योपलब्धिरप्याशामोदकायितैवेत्यलमौत्पत्तिकेन।

**अथ** नैमित्तिको विरोध इति चेत्। न। परिश्रममात्रत्वात्। कथम्। इत्थम्। निमित्तेन निर्वृत्तो विरोधो नैमित्तिकः। तच्च निमित्तं स्वार्थोपहतिर्वा परार्थोपहतिर्वेति वक्तव्यम्। तयोरेव तद्धेतुत्वप्रसिद्धेः। सर्वो वाव लोको देवो वा मनुष्यो वा स्वार्थं वा परार्थं वा कामयमानः कायेन मनसा वाचा परिस्पन्दते, नाकामयमान इति। किं कारणम्। अकामस्य

तस्य प्रवृत्त्यनुपपत्तेः । प्रवृत्तिर्हि कामेन नियता, तदभावे सा कथं प्रादुःष्यात् । नह्यकामो वाऽऽप्तकामो वा क्वचित्प्रवर्त्तते वा निवर्त्तते वे-त्यस्ति प्रत्ययः । क्रियामात्रस्य कामनया व्याप्तत्वात् । यदाह भगवान्मनुः

अ. २ श्लो. ४

"अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥" इति ।

तथाचैवं चेष्टमानः स्वार्थोपघाताद्वा परार्थोपघाताद्वा नियमेन दुःख-मापद्यते । दुःखाच्च दुःखे तत्साधने च विरोधमिति । किं कारणम् । दुःखानुशयित्वाद्विरोधस्य । विरोधस्तावद्दुःखं वा दुःखस्य साधनं वानुशेते, तदभिज्ञस्यैव तत्र वा तत्साधने वा विरोधोपलब्धेः । सोऽयमर्थोपघाताज्जाय-मानो विरोधो नैमित्तिक इत्याख्यायते । निमित्तेन जातस्यैव नैमित्तिकत्वात् । धर्माणां चार्थः केवलमाश्रय एव । तदतिरिक्तस्य तस्यानुपलम्भात् । तेनैव तेषां चरितार्थत्वाच्च । निराकारत्वसाकारत्वे वाव धर्मौ । तावपि चेद्विद्विषीयाताम्, तत्प्रयुक्तावेव विद्विषीयातां नान्यप्रयुक्ताविति वक्तव्यम् । परं तन्नोपपद्यते । किं कारणम् । अनादिकालादेवेतरेतरस्मिन्ननुग्रहतन्त्रीभूत्वा संपादिताधिकरणत्वेन तयोश्चरितार्थत्वात् । यदा वाव सदातनत एव कामचारेण लब्धैकाधिकरणौ तौ सखायाविव चरितार्थौ, किमर्थं पुनर्मुधा वैरायेयाताम् किमर्थं वाऽपमन्येयाताम् । नहि कश्चिद्धर्मोऽपि निष्प्रयो-जनः कंचन वैरयते वापमन्यते वा । किंपुनर्धर्म इति । यथा चैतौ संभि-न्नाश्रयौ तथोपपादितमधस्तात् । उपरिष्टाच्चेश्वरे समानाश्रयत्वमुपपादयिष्यते इति न काचनानुपपत्तिः । तथाच निराकारत्वसाकारत्वधर्मयोर्विरोधे निमित्तानिरूपणात्फलाभावाच्च नैमित्तिको विरोध इत्यभिदधद्वादिशौण्डो मन्दाक्षायतामिति कृतं प्रपञ्चेन परिश्रममात्रहेतुनानेन ॥

**किंच** यश्चायं निराकारत्वसाकारत्वयोर्वर्तमानो विरोधः स चैको वा द्वौ वा । न तावदेक इति व्याहर्तुं शक्यते । किं कारणम् । स्वस्मिन्नपि स्व-विरोधप्रसङ्गात् । एकस्तावन्निराकारत्वसाकारत्वधर्मिप्रतियोगिको विरोधो-ऽभ्युपगम्यते । सच प्रत्येकमभ्युपगम्यमानो यथाहि निराकारत्वसाकारत्वे वाव धर्मौ मिथो विरोधयते तद्वन्निराकारत्वेन निराकारत्वं साकारत्वेन च साकारत्वमपि विरोधयेत । किं कारणम् । समर्थत्वात् । विरोधो हि विरो-

धतायै समर्थायते, नाविरोधतायै । चेदविरोधताया अप्यात्मानं समर्थयेत, स्वरूपादेव प्रच्यवेत । स च यथैकत्र पर्याप्तस्तथा परत्रापीति गम्यते। नह्यसति बन्धके समर्थो वाव क्वचिदसमर्थायते । स्वभावस्याशक्यनिवारणात् । यो यस्य स्वभावः स न केनापि प्रतिरोद्धुं पार्यते । धर्मिसमसत्ताकत्वेन तस्य तद्पाश्रान्वपायत्वात् । अत एवोक्तं भगवत्पादैर्भगवद्गीतायां

**अ० ३. श्लो० ३३**

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥** इति ।

ज्ञानवान् चेतनो जीवो यदा स्वतन्त्रः सन्नपि भूयः प्रकृतेः सदृशमेव चेष्टते तदा का कथाऽचेतनानां विरोधादिभूतधर्माणामित्यप्याशयः । तदेवं समर्थो वाव विरोधो निराकारत्वसाकारत्वयोरिव धर्मयोरेकैकस्मिन्नपि स्वस्मात्स्वविरोधमापादयिष्यते । प्रतियोगितानुयोगितासंसर्गेण प्रतिस्वमपि तस्य विद्यमानत्वात् । नहि निराकारत्वप्रतियोगिको विरोधस्तद्धर्मिको न भवतीति समाधातुमीश्यते । एकस्य तस्य तत्प्रतियोगिकत्वे सति तद्धर्मिकत्वेनापि सुवचत्वात् । यथा च निराकारत्वे साकारत्वेऽपि तथैव बोद्धव्यमिति स्वेन स्वं विरुध्येत । परं न विरुध्यते । किं कारणम् । स्वेन स्वस्य विरोधादृष्टेः । नह्यात्मनात्मा विरोधनीयो वाऽविरोधनीयो वा भवितुमर्हति। स्वात्मनि वृत्तिविरोधात् । अनुभवपराहतत्वाच्च । विवक्षाभेदस्य तद्भेदप्रयोजकत्वे तु प्रतिज्ञानमेव हीयेतेति कृतमेकाकिना तेन ।

**अथ** द्वौ वा विरोधौ निराकारत्वधर्मिकस्तावदेकः साकारत्वधर्मिको द्वितीय इति । **तन्न** । विकल्पाऽसहत्वात् । एष हि तत्र विकल्पः । किमेतावभ्युपगतौ विरोधावपि परस्परं विरुद्धौ वाऽविरुद्धौ वा । विरुद्धौ चेत्तर्हि केन विरोधेन विरुद्धौ स्वेनैव वा केनचिदन्येन वा । स्वेनैव चेदात्माश्रयो वा कर्मकर्तृभावो वा दोषः प्रसज्येत । धातूपात्तक्रियायाः समानाश्रयविषयत्वेनोक्तलक्षणदोषस्य सिद्धत्वात् । परेण चेत्तदा तेनापि ताभ्यां विरुद्धेनैव भवितव्यमविशेषात् । येन परस्ताभ्यां विरुध्यते सोऽपि तावेव वा तदपरो वा । तावेव चेदन्योऽन्याश्रयः । अपरश्चेदनवस्था । अथ स्वरूपतश्चेद्विरुद्धौ तौ, तर्ह्यन्यत्रापि स्वरूपमेव विरोधो निरूप्यतां किमतिरिक्तेन । ओमिति चेन्मोच्चैर्वाच्यम् । स्वरूपविरोधस्याग्रे निरासिष्यमाण-

त्वात् । अथाविरुद्धौ तौ विरोधाविति चेत्तदा कृतमाश्रयविरोधेन । नहि निराकारत्वसाकारत्वाश्रितविरोधयोरविरोधे निराकारत्वसाकारत्वे वावाऽऽश्रयौ मिथोविरुन्धाते । धर्मविरोधस्यैव धर्मिविरोधाऽभिव्यञ्जकत्वात् । यत्र वाव साक्षाद्विरोधस्वभावयोरपि विरोधयोरविरोधस्तत्र का प्रत्याशाऽविरोधस्वभावयोर्निराकारत्वसाकारत्वयोर्विरोधस्येत्यलं प्रपञ्चेन ।

**किंच** तर्केणापाद्यमानो विरोधो विरुद्धयोर्निराकारत्वसाकारत्वयोरवतिष्ठेताऽविरुद्धयोर्वा । न तावदविरुद्धयोरिति युक्तमापाद्यते । प्रतारकत्वप्रसङ्गात् । युक्तं वाव युक्तवदापादयन् सिद्धं वाव सिद्धवत्संवादयन् प्रतिपित्सितं वाव प्रतिपित्सितमिव संलापयन्नप्रतारकः संपद्यते । यस्तावदयुक्तं वा युक्तवदापादयेदसिद्धं वा सिद्धवत्संवादयेदप्रतिपित्सितं वा प्रतिपित्सितमिव संलापयेत्, स च प्रतारक एव न जात्वप्रतारक इति । यद्वाव यत्र न विद्यते तत्तत्र चेत्संभावयेत् कथं न स प्रतारयेत्, कथं वा न तिरस्कारयेत । यदेतत् किलाविरुद्धयोर्विरोधानधिकरणयोर्निराकारत्वसाकारत्वधर्मयोर्यत्नेन विरोधस्यापादनं तदपि सरलान्तःकरणानां प्रतारणमेव । न वावाऽप्रतारणमिति । किं कारणम् । तदनधिकरणे तदधिकरणताया आपादनात् । विरोधानधिकरणे तावन्निराकारत्वसाकारत्वे धर्मौ विरोधाधिकरणतयाऽऽपाद्येते चेत्तत्कथं समञ्जस्येत् । नहि यद्यस्यानधिकरणं तत्तस्य क्वचिदधिकरणायते । यद्वा प्रमितं न भवति तत्क्वचित्प्रमितायते । तदभाववति तत्प्रकारकापादनस्य विभ्रममात्रत्वात् । ये किलेत्थमुत्प्रेक्षमाणा अपि वावदूकाः केवलं परचित्तविमोहनाय विद्वद्गोष्ठ्यामुन्मत्तवद्भूयः प्रलपेरन् कथं तेऽवधेयवचसः संपद्येरन् । कथं वा नेमे लौकिका नवा परीक्षका इति सद्भिः प्रमत्तवन्नोपेक्ष्येरन् । हठाद्वै पाण्डित्यवैभवं प्रख्यापयन्तो वा न दूरतस्तिरस्क्रियेरन् । किमुत तिरस्क्रियेरन् । असंबद्धमाभाषमाणानां तेषामारब्धत एवेदृग्लाभस्य सुलभत्वादिति युक्तः प्रतारकत्वप्रसङ्गः ।

**अथ** विरुद्धयोरितिचेन्न । आत्माश्रयादिदोषप्रसङ्गात् । कथम् । इत्थम् । विरुद्धयोर्निराकारत्वसाकारत्वयोर्विरोधस्तावदास्थीयते । तत्रेदमभिधातव्यम् । किं स्वेनैव विरुद्धयोस्तयोः स्वं विरोधोऽवतिष्ठते परेण वा । स्वेनैव चेद्विरुद्धयोः स्वयमवतिष्ठेत, तदाऽऽत्मानमेवाधितिष्ठेदित्यात्माश्रयः । परेण चेत्तदा तेनापि विरुद्धयोरेवावस्थातव्यमविशेषात् । येन च विरुद्धयोः परस्यावस्था-

नमाश्रीयेत सोऽपि प्रथमो वा स्वयं द्वितीयो वा, तदपरस्तृतीयो वा कश्चित्। तत्र प्रथमश्चेदन्योन्याश्रयः। स्वयं चेत्पुनरात्माश्रयः। तदपरस्तृतीयश्चेत्तदा तस्यापि विरुद्धयोरेवावस्थितेश्चक्रकम्। अथैतद्दोषपरिजिहीर्षया चतुर्थादिविरोधश्चेदाश्रीयते तदाऽनवस्था। गत्यन्तराभावाच्चेदनवस्थाप्याश्रीयेत। तदा वक्तव्यं किमास्थीयमाना एते विरोधाः क्रमेण निराकारत्वसाकारत्वाख्यधर्मिणौ परिरभन्ते युगपद्वा। क्रमेण चेत्तदा समानाश्रययोर्निराकारत्वसाकारत्वाख्यधर्मिणोरनादित्वमासज्येत। क्रमेण परिरभमाणानामसंख्येयानां तेषामनादित्वस्यार्थिकत्वेन धर्म्यनादित्वस्याप्यावश्यकत्वात्। तथाच गतं विरोधेन। यथाचैषोऽनादित्वप्रसङ्गः. तथा प्राचां लोपप्रसङ्गोऽपि बोद्धव्यः। पूर्वपूर्वविरोधकार्यस्योत्तरोत्तरविरोधेनैवान्यथासिद्धेः पूर्वपूर्वविरोधवैयर्थ्येन तल्लोपप्रसङ्गस्यौचित्यात्। तथाचाग्रे धावन्पश्चाल्लुप्यमानो विस्मरणशीलाध्ययनवत्सविरोधप्रवाहः किमालम्बेत। किं वा परिरभेतेति। युगपच्चेत्तर्हि विरुद्धयोर्विरोधावस्थानमिति पक्षः क्षीयते। विरोधानधिकरणयोरेव निराकारत्वसाकारत्वयोः खलकपोतन्यायेन तेषां विरोधानामवरोहणात्। अथैतद्दोषपरिहारेप्सयाऽपि चेदेकेन विशिष्टयोरपरावस्थानमभ्युपेयात्। तदाऽविनिगमो वाव दोषः प्रसज्येत। किंविशिष्टयोः कोऽवस्थीयत इति निर्धारणायां नियामकस्य दुःशक्यनिरूपणात्। किंचैवमपि विरोधास्ते स्वीक्रियेरन्, चेत्तत्परम्परावगाहिनी काचित्संविदुदयमासादयेत्। परं नो सोदेतीत्यसिद्धा सा भवित्री विरोधपरंपरा किमस्माकं करिष्यतीति भवतामेव तद्वारमन्थराक्रान्तदोषाणां सा शिवा भूयात्किं नो वीतरागाणां भवद्विरोधपरम्पराकिंकर्या।

**नच** वाच्यं विरोधविशिष्टयोर्न विरोधावस्थानमभ्युपगच्छामो येन विशिष्टवृत्तिधर्मस्य विशेषणवृत्तित्वनियमेनात्माश्रयादयो दोषाः प्रसज्येरन्। किं तर्हि। विरोधोपलक्षितयोरिति। **नून**मेतत्स्थूलं दर्शनं न सूक्ष्मदर्शनमिति। किं कारणम्। सूक्ष्मदृशामीदृक्प्रतिवचनानुपपत्तेः। नहि लक्षणस्वरूपज्ञाः कृतपरिश्रमाः सूक्ष्मदृशोऽर्वाग्दृश इव गोष्ठ्यां कचिदित्थं समादधिरे यथाऽद्य यूयं भद्राः समादध्वे। किंचिदुत्प्रेक्ष्यताम्। ये वाव हिताहितप्राप्तिपरिहारानुकूलव्यापारानभिज्ञा नष्टैहिकामुष्मिकार्थपाटच्चरा इव प्रत्यहं परवञ्चनोत्सुकाः किं तान्प्रतिवच्मः किं वा प्रतिसमादध्म इति। नहि साधारण्येन प्रतिबोध्यमानाः किलार्या-

र्भकाः सहसा प्रतिबुध्यन्ते । कस्मात् । तर्कागाधार्णवे नित्यं पोप्लूयमानतया देवार्यागमेषु श्रद्धाविश्वासयोर्दोधूयमानानां नितान्तस्तब्धचेतसां तेषां सभ्यसीमातिक्रान्तत्वेनाशक्यबोधत्वात् । अतएवोक्तं राजर्षिभिः **नीति. ३**

**अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।**
**ज्ञानलवदुर्विदग्धं ब्रह्मापि च तं नरं न रञ्जयति ॥** इति

किं तर्हि मौनं श्रेयः । न । प्रतिबोध्यते । यावदधिकारमवस्थितेराधिकारिकाणामिति । सावधानेनाकर्ण्यताम् । कादाचित्कं ह्युपलक्षणं वावोपलक्षणविदश्चक्षते नाकादाचित्कमिति । येन ह कादाचित्केन स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिरुत्पाद्यते तदेव किलोपलक्षणमिति । तच्चोपलक्षणमिह निराकारत्वसाकारत्वयोर्विरोधः प्रतिनिधाप्यते । सोऽपि वाव कादाचित्कश्चेदसेत्स्यत्, महदनिष्टमापत्स्यत् । किं कारणम् । तथाभूतस्य तस्यानभ्युपेतत्वात् । नहि निराकारत्वसाकारत्वयोः कादाचित्को विरोधो निराकारैकवादिभिरुररीक्रियते । तेषां निराकारैकधर्मिणि साकारत्वकल्पनाऽभावेन विरोधचर्चानुपपत्तेः । उपपत्तौ वा प्राचीनदोषानुषङ्गोऽपि वज्रलेपायतामिति दुर्दैवेन विलसितः खलु भवतामुपलक्षणपक्षोऽपि राद्धान्तच्युतिमन्तरेण किमुपकुर्वीत । न किमप्युपकुर्वीतेति ।

**पर**मतावेशेन चेद्रेक्यते । तदा वक्तव्यमवशिष्यते । किं तद्वक्तव्यम् । एतद्वक्तव्यम् । यत्तावदुपलक्षणोपलक्षितत्वं निराकारत्वसाकारत्वयोरुपस्थाप्यमानं, तदपि विशेषणं वोपलक्षणं वा । विशेषणं चेद्भूयः प्राचीनदोषानुषङ्गः । किंकारणम् । विशेषणस्य तस्य विरोधावस्थितिकालमात्रावस्थायित्वेन तत्पक्षोक्तदोषाणामत्रापि दुःशक्यनिवारणात् । उपलक्षणं चेत्तदुपलक्षितत्वस्यापि विशेषणत्वे वोपलक्षणत्वे वा विकल्पिते पुनरनवस्थाप्रसङ्गात्पुरः प्रधावतां सैव दुश्चिकित्सा त्रिदोषतेति कृतं तदधिकपरीक्षया ।

**एते**नोपहितयोरिति पक्षोऽपि प्रत्युक्तो वेदितव्यः । कस्मात् । उपाधेस्तटस्थतयोपधेयकोटावप्रवेशेन परिशेषादविरुद्धयोरेव विरोधस्थितेः पूर्वोक्तदोषस्यात्र निःशङ्कावतारादिति सर्वं रमणीयम् ।

**किंचा**भ्युपेयमानो विरोधो निराकारत्वसाकारत्वयोः स्वरूपं वा स्याद्धर्मो वा स्यादिति निर्णेतव्यम् । तत्र न तावत्स्वरूपं विरोध इति निर्णेतुं शक्यते । किं कारणम् । निरपेक्षत्वप्रसङ्गात् । तथाहि । सापेक्षस्तावद्विरोधः । स हि नियमेन स्वप्रतीतौ धर्मिप्रतियोगिनौ वावापेक्षते नानियमेनेति । यत्र

वाव धर्मिप्रतियोगिनौ न प्रतीयेते, न तत्र विरोधबुद्धिरुद्याति । यत्र वावोद्याति, तत्र तौ प्रतीत इति । किं कारणम् । स्वभाव एव कारणम् । स्वभावः किलैष विरोधस्य "यदा ज्ञायते भेदादिवत्सापेक्षप्रत्यय एव ज्ञायते न निरपेक्षप्रत्ययः इति । कस्य क्व विरोध इति नियताकाङ्क्षायां धर्मिप्रतियोगिनोरवश्यं वक्तव्यतया सापेक्षप्रत्ययविषयत्वस्य स्वभावाप्तत्वात् । स चेत्स्वरूपमभविष्यत्, एकान्तेन निरपेक्षिष्यत । कस्मात् । स्वरूपात्मकत्वात् । स्वरूपस्य च निरपेक्षैकस्वभावत्वात् । निरपेक्षैकस्वभावं हि स्वरूपं । नच तत्प्रतीतौ धर्मिणं वा प्रतियोगिनं वा क्वचिदपेक्षते । सकृद्दृष्टे कस्य केत्यपेक्षाया एवानुपपत्तेः । यत्र वावापेक्षैव नोपपद्यते, तत्र क्व सापेक्षत्वं । क्व वा संशय इति । तथाच निरपेक्षस्वरूपात्मको विरोधोऽपि निरपेक्ष एव प्रसज्येतेति साधुर्निरपेक्षत्वप्रसङ्गः ।

**किंच** सावधिकस्य तस्य स्वरूपत्वं वा निरवधिकस्य वा । न तावन्निरवधिकस्य । तादृग्विरोधासिद्धेः । सावधिकस्य चेत्तर्हि संकरप्रसङ्गो दुर्वार इति कृतं स्वरूपेण ।

**अथ** धर्म इतिचेत् । न । संबन्धानिरूपणात् । संबन्धनिरूपणाधीनस्तावद्धर्मधर्मिभावः । यत्र वाव संबन्ध एव न घटते । कुतस्तत्र धर्मधर्मिभावः । कुतस्तरां च धर्म इति । संबन्धो हि निरूप्यमाणः संयोगो वा स्यात् समवायो वा स्यात् तादात्म्यो वा स्यादिति । न तावत्संयोग इति निरूपयितुं शक्यते । किं कारणम् । नियतत्वात् । संयोगः किल कर्मवद्भिर्नियतो नाकर्मवद्भिरिति । यत्र वाव कर्म न विद्यते न तत्र संयोग उत्पद्यते । कस्मात् । संयोगस्य कर्मैकजन्यत्वात् । यावन्तो वाव संयोगास्तावन्तः कर्मणैव जन्यन्ते नाकर्मणेति । साक्षाद्वाऽसाक्षाद्वा निखिलानां तेषां कर्मैकजन्यत्वस्यैवावधारितत्वात् । तत्र यः साक्षात्कर्मणा जन्यते स कर्मज इति व्यपदिश्यते । यश्च परम्परया स च संयोगज इत्येतावानेव विशेषः । अत एव कर्मवैचित्र्यात्संयोगसृष्टिवैचित्र्यं भगवत्पादा अप्यसूत्रयन्. तद्यथा. **वैशे. अ. ७ आ. २ सू. ९**

**"अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः–"**इति

तच्च संयोगैककारणं कर्म द्रव्येष्वेव वर्तते नाद्रव्येष्विति । निराकारत्वसाकारत्वेऽप्यद्रव्ये विरोधश्च सुतरामद्रव्यमिति । तथाच कथं तत्र कर्मोत्पत्तिः कथं वा संयोगोपजनिरिति स्वयमेव परिशीलनीयम् । किं पुनरस्माकं प्रपञ्चेन ।

**अथ** समवाय इति चेत् । न । अयुक्तत्वात् । अयोगो हि द्विविधः शास्त्रायोगो युक्त्ययोगश्चेति । तत्र निराकारत्वादिविरोधयोरभ्युपगम्यमानः समवायो न तावच्छास्त्रेण युज्यते। नापि कयाचन युक्त्येति। कथम् । इत्थम् । वैशेषिकं तावच्छास्त्रं। तच्च समवायमभ्युपगच्छत्कार्यकारणभूतानामकार्यकारणभूतानां वाऽयुतसिद्धानामाधार्याधारभावेनावस्थितानां द्रव्यगुणकर्मसामान्यविशेषाणामेव समवायाख्यं संबन्धमभ्युपगच्छति । न जातु निराकारत्वादिविरोधयोरद्रव्यादिरूपयोरिति । तेन युक्तः शास्त्रायोगः प्रथमः ।

**संप्रति** युक्त्ययोगस्तावदपरो निरूप्यते। संबन्धो हि संबन्धिभ्यां संबद्धः संबन्धबुद्धिप्रयोजको भवति नासंबद्ध इति । किं कारणम् । दृष्टत्वात् । संयोगो यथा संबन्धः समवायलक्षणेनान्येन संबन्धेन संबन्धिभ्यां संबद्धः संबन्धबुद्धिप्रयोजको वाव दृष्टः तथा समवायोऽपि संबन्धत्वाविशेषात् संबन्धिभ्यां संबद्धः सन्नेव संबन्धबुद्धिं प्रयोजयेत् । येन च संबन्धेन समवायिभ्यां संबद्धः समवायः संबन्धधियं प्रयोजयेत् । सोऽपि संयोगश्चेत्तर्हि स एव शास्त्रायोगः । समवायश्चेत्तर्हि तस्य तस्यान्योऽन्यः समवायः कल्पयितव्य इत्यनवस्था । प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेः समवाय एवानुपपन्न इति कृतमयुक्तेन तेन ।

**एतेन** तादात्म्यमिति पक्षोऽपि निराकृतो वेदितव्यः । तदात्मभावस्य धर्मस्वरूपयोर्विश्रान्तत्वेन तत्पक्षोक्तदोषाणामेव पर्याप्तत्वात् । तदेवं दुर्निरूप्यमाणे संबन्धे तन्निरूपणायत्तनिरूपणस्य धर्मधर्मिभावस्य सुतरां दुर्निरूप्यत्वादनुपपन्नतमो भवतां धर्मपक्ष इति सर्वं मनोरमम् ।

**किंच** कश्चायं निराकारत्वसाकारत्वधर्मयोर्विरोधः किं सहानवस्थानलक्षणो वा १ बध्यघातकभावलक्षणो वा २ किमितरेतराभावात्मको वा ३ तदत्यन्ताभावसमानाधिकरणात्मको वेति ४। तत्र न तावत्सहानवस्थानलक्षणो विरोध इति युक्तं चोद्यते । किं कारणम्। शब्दशून्ययोस्तदसहानवस्थानलक्षणाविरोधस्य वादिप्रतिवादिभ्यां सिद्धवदुपात्तत्वात्। वादिनो वा स्युः प्रतिवादिनो वास्युः सर्वे वाव शब्दशून्ययोस्तदसहानवस्थानलक्षणाविरोधं सिद्धवदुपाददत एव। कथमन्यथा कूपाकारं वाऽकूपाकारं वा कंचिदाकारं परिकल्प्येह सिद्धवद्व्यपदिशेयुः ‘शतमिति ‘सहस्रमिति ‘घट इति ‘पट इति । नहि निराकारः कश्चिदाकारकल्पनया विना कचिदित्थं व्यपदिश्यते। व्यपदेशस्य तस्या-

कारकल्पनानिबन्धनत्वात् । आकारकल्पनानिबन्धनस्तावदखिलो व्यपदेशः 'स्फोटगोचरो वा वर्णगोचरो वा शून्यगोचरो वाऽशून्यगोचरो वा ब्रह्मगोचरोवाऽब्रह्मगोचरो वेति नास्माभिर्विशेष्यते । अनुपयोगात् । निर्विशेषसविशेषवादयोश्चाकारकल्पनाया अविशेषात् । कल्पिते पुनराकारे ध्वन्यात्मके वा रेखात्मके वा स्वाभाविके वौपाधिके वा क्व तद्विरोधः क्व वा नाविरोध इति स्वयं विचार्यतां किमास्माकीनायासेन ।

भागवतधर्मयोस्तथाविरोध इति चेत् । मुधाभिशंस्यते । कस्मात् । भगवति परमकारुणिके वर्तमानयोर्निराकारत्वसाकारत्वधर्मयोर्विरोधस्य विचार्यमाणत्वेनाऽद्याऽप्यसिद्धप्रायत्वात् । सिद्धप्रायं चोदाह्रियते नासिद्धप्रायमिति कृतं वश्चोदनयानया ॥ १ ॥

**नापि** वध्यघातकभावलक्षणो विरोध इति युक्तमुदीर्यते । किं कारणम् । अनुपपत्तेः । अनुपपन्नो वाव निराकारत्वसाकारत्वधर्मयोर्वध्यघातकभावलक्षणो विरोध इति । कथम् । इत्थम् । यत्र हीदृग्विरोधस्तत्र तावदेको घातकोऽपरश्च वध्य इति वक्तव्यम् । कश्चेह घातकः कश्च वध्य इति । निराकारत्वं घातकः साकारत्वधर्मश्च वध्य इतिचेत्तदा वक्तव्यमवशिष्यते । किंतर्हि वक्तव्यम् । एतद्वक्तव्यम् । यद्घातककर्तृको घातो वाव वध्यस्य निर्वाच्यः स च वध्याद्भिन्नः स्वतन्त्रः कश्चित्पदार्थो वा स्यात् तद्धर्मो वा स्यात्तदात्मैव वा स्यादिति । वध्याद्भिन्नः स्वतन्त्रः कश्चित्पदार्थो घात इतिचेत् तदा वध्यस्य साकारत्वधर्मस्य घातो वाव सुतरां नोपपद्यते । किं कारणम् । तत्संसर्गाभावात् । घातो हि वाव स्वतन्त्रः कश्चन पदार्थः नासौ कस्यचित्संसर्गमाकाङ्क्षते । चेत्संसर्गमाकाङ्क्षेत् । स्वातन्त्र्यमेवापहस्तयेत् । नच कामयते च स्वतन्त्रयते चेत्येतदुभयं युज्यते । कस्मात् । बद्धस्य स्वातन्त्र्यायोगात् । नहि बद्धः कश्चन स्वतन्त्रो दृष्टः । घातोऽपि चेद्वध्यसंसर्गकामनया स्वात्मानं बध्नीयात् । गुणतामापादयेत् । स्वतन्त्रतां चापगमयेत् । स्वतन्त्रश्चैषोऽभ्युपगत इत्यनुपपन्नः संसर्गः । संसर्गे वावानुपपन्ने वध्यस्य घातः सुतरामनुपपन्न इति । किं कारणम् । प्रयोजकाभावात् । संसर्गो हि वाव तद्वत्त्वप्रयोजको भवति । न स्यादसंसर्ग इति । यस्य वावार्थस्य येन वावार्थान्तरेण संसर्ग एव नोपजातः । स कथं तद्वत्तया व्यपदिश्येत । कथं वा तद्वानिति संभाव्येत । नहि पाकेन संसर्गाभावे पाक्यस्यान्नादेः कचित्पाकः संभाव्यते, तापेन वा संसर्गाभावे तप्यस्य सत्वादेस्ताप

इति । यथा हि पाकसंसर्गाभावे पाक्यस्यान्नादेः तापसंसर्गाभावे वा तप्यस्य सत्वादेः पाकतापौ किल नचोपपद्येते नवा क्वचित्संभाव्येते । तथा घातेन संसर्गाभावे वध्यस्य तस्य घातोपि कथमुपपद्येत कथं वा संभाव्येत । किं तर्हि । नोपपद्येत न वा संभाव्येत संभावनाहेतोरेवाभावादिति युक्तमुक्तं सुतरां नोपपद्यत इति ।

**अथ** धर्मो घात इति चेद्बुध्वा नोच्यते । कस्मान्न बुध्वोच्यते । परिहारस्यैवाभिधानात् । यत्तावद्वध्यस्य धर्मो घात इत्यभिधीयते न तद्विरोधः किल समाधीयते । किमुत परिह्वियते । कथम् । उच्यते । घातो हि वाव प्रध्वंसः । स च घातककर्तृकोऽपि न पुनः प्रध्वस्यते । किं कारणम् । ध्वंसस्य पुनर्ध्वंसायोगात् । अनवस्थानाच्च । यः खलु न पुनः प्रध्वस्यते स च न ध्वंसस्य प्रतियोगी । किमुत अप्रतियोगीति । तथाच ध्वंसाप्रतियोगी घातो वध्यस्य धर्मिणो धर्म इत्यभ्युपगमे वध्यस्य धर्मिणोऽपि घाताप्रतियोगित्वमभ्युपगन्तव्यम् । अन्यथा निराश्रयो धर्मः कथमात्मानमुपलभेत कं वा धर्मिभेदं शरणमुपाश्रयेत । नहि निराश्रयो धर्मः कश्चिदात्मानमुपलभते । सङ्गच्छते वा निर्धर्मिको धर्म इति । किं कारणम् । तत्सत्वे तत्सत्वदर्शनात् । दृष्टं वाव घटादिसत्वे रूपादिसत्वम् । आत्मसत्वे वा ज्ञानादिसत्वमिति । तत्साम्यादिह वध्यस्यापि घाताप्रतियोगित्वेऽभ्युपगम्यमाने कथं न निराकारत्वसाकारत्वधर्मयोर्वध्यघातकभावलक्षणो विरोधः परिह्वियेत कथं वाऽविरोधो न विधीयेतेति स्वयमेव विचारयितव्यं किमस्माकं विचारेणेति ।

**अथात्मैव** घातो वध्यस्येति चेत् । न । विरोधाभावप्रसङ्गात् । तथाहि यस्तावद्यस्यात्मा संपद्यते । स च न ततो मात्रयापि भेत्तुमर्हति । भिद्येत चेत्तदात्मतामेव न व्रजेत । नह्यात्मा च भिद्यते चेत्युभयमन्वयते । भेदस्य तस्य भिन्नधर्मिप्रतियोगितयाऽभिन्नधर्मिप्रतियोगिकत्वे मानाभावात् । स्वस्मात्स्वभेदायोगाच्च । घातोऽपि वाव वध्यस्यात्मेति न वध्यो घातादतिरिच्यते । यथैव घातस्तथैव वध्य इति मन्तव्यम् । घातः किल घातककर्तृक इति वध्योऽपि तत्कर्तृक एव निष्पद्यते । तत्र किल वध्यस्य तत्कर्तृकत्वे निष्पन्ने निराकारत्वसाकारत्वधर्मयोः क्व विरोध इत्यालोचयितव्यम् । कस्मादालोचयितव्यम् । यतो निराकारत्वधर्म एव साकारत्वोत्पादक इति । वृत्तालोचना । यथाहि घातकोत्पाद्यो घातो न तेन तस्योक्तलक्षणो विरोध इति ।

तदुत्पादकत्वात् । तथा वध्योऽपि तदुत्पाद्य एवेति तेनापि तस्य विरोधाभाव एव प्रसज्यते न तावद्विरोध इति । तदेवं घातककर्तृकस्य घातस्य निरूपयितुमशक्यत्वादनुपपन्नः खलु निराकारत्वसाकारत्वधर्मयोर्वध्यघातकभावलक्षणो विरोध इति । तथा चालं भूयस्या विरोधानुपपत्तिकथयेति सर्वं निरञ्जनम् ॥ २ ॥

**नापी**तरेतराभावात्मको विरोध इत्यभिधातुं शक्यते । किं कारणम् । भावात्मकत्वात् । यौ तावद्भावात्मकौ भवतः । नच तौ क्वचिदितरेतराभावात्मकौ संभावयितुमपि शक्येते । किमुत निर्द्धारयितुमिति । नच भावो भावोऽपि स्यादभावोऽपि स्यादित्यन्तर्वाणयो मन्यन्ते । किंवा पूर्वे महर्षयो वाव क्वचिदास्थिषतेति । यद्वाव महर्षयो न क्वचिदास्थिषत नवावान्तर्वाणयो मन्यन्ते । तत्कथमस्माकं धियमाविशेत् श्रद्धां वा संसृजेत् । नहि क्वचिदन्तर्वाणिभिर्वा महर्षिभिर्वाऽननुभूतं धियमाविशति । श्रद्धां वा संसृजति । किं तर्हि । अनुभूतमिति । भावस्याभावात्मकत्वं चाननुभूतम् । किं कारणम् । वस्तुनि विकल्पायोगात् । यत्तावत्कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं । तद्विकल्पेतापि । न किंचिद्व्यूध्यते । शक्यत्वात् । यत्पुनः कर्तुमकर्तुमन्यथा वा कर्तुमशक्यं निरपेक्षमेकात्मवस्तुतत्त्वम् । तत्कथं विकल्पेत 'एवं नैवं भवति न भवतीति । कथं वाऽनुभूयेतापि 'इदमित्थमनित्थमिति । अशक्यत्वात् । स्याद्वादप्रसक्तेश्च । किं तर्हि । यद्यदात्मकं तत्तदात्मकमेव नातदात्मकमिति । स्याद्वादानुहारस्य सर्वथा विजुगुप्सितत्वात् । अत एवोक्तं भगवता भगवद्गीतायाम्. **अ. २ श्लो. १६**

**"नासतो विद्यते भावो नाभावो विद्यते सतः"** इति ।

भावात्मकौ चैते निराकारत्वसाकारत्वे वाव धर्मौ नचेतरेतराभावात्मकाविति । किं कारणम् । आर्षाम्नानात् । यत्खल्वार्षाम्नानं, तन्नः सर्वेषां नूतनानामनूतनानां च सर्वेष्वर्थेषु छन्दोवत्प्रमाणमिति । कस्मात् । सर्वज्ञकल्पा हि ऋषयः । ते किल विमलहृदा सर्वार्थप्रतिपत्तारः सम्यग्दर्शनानलदग्धाखिलकल्मषैधसः करुणैकमूर्त्तयो जगदारण्यान्यां परिभ्रमतिखिन्नचेतसामसुभृतां स्वस्तिभावाय "हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामस्त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्ति गन्तव्यं च गमिष्यन्तीति परमानुकम्पया प्रवर्तमाना नच कथमपि मृषोद्यवचसः संपद्यन्ते, परिणामतापसंस्कार-

दुःखैर्गुणवृत्तिविरोधाच्च दृष्टादृष्टार्थविषयावद्यदृष्टयुत्पन्नतीव्रसंवेगोत्तमसम्पदाढ्यधीनामूर्ध्वरेतसां तेषां सर्वज्ञकल्पानां गाढं ब्रह्मात्मैक्यैकप्रवणचेतस्तया निर्विकल्पैकसंविदामप्रामाण्यबीजाशङ्कापङ्ककलङ्काङ्कुरासंभवेनेश्वरस्येव मृषोद्यवचस्त्वाभावे श्रद्धातव्यवचनताया आर्यानार्याभ्यां संमतत्वात् । अतएव तत्प्रणीतानि सूत्राणि छन्दोवद्भवन्तीति भगवत्पादाः पतञ्जलयो "**वृद्धिरादैजादिपाणिनीयेषु** भाष्यया ञ्चक्रिरे । यत्र वावार्षाज्ञानस्य छन्दोवत्प्रामाण्यं भगवत्पादाः पतञ्जलयोऽपि भाषयाञ्चक्रिरे । तत्र कोऽस्माकं वा युष्माकं वा पर्यनुयोगावकाश इति । तस्माच्छन्दोवत्प्रामाण्यादार्षाज्ञानान्निराकारत्वसाकारत्वधर्मयोर्भावात्मकत्वमभ्युपेतव्यम् । भवति च निराकारत्वसाकारत्वधर्मयोर्भावात्मकत्वे किलार्षाज्ञानमिति । तद्यथा **अष्टाध्या. अ. ५ पा. १ सू. ११९**

**"तस्य भावस्त्वतलौ"** इति ।

तथाच निराकारस्य भावो निराकारत्वं साकारस्य भावः साकारत्वमिति निराकारत्वसाकारत्वधर्मयोरार्षाज्ञानेन भावप्रत्ययान्ततया भावात्मकत्वे संसिद्धे क्व पुनरितरेतराभावात्मकस्तद्विरोधो निर्धार्येतेति निराकारैकवादिभिरेव विभावयितव्यं किमस्माकं प्रपञ्चेन निष्प्रपञ्चानामिति ॥ ३ ॥

**नापि** तदत्यन्ताभावसमानाधिकरणात्मको विरोध इति वक्तुं हव्यते । किं कारणम् । असंभवात् । समानाधिकरणयोर्वाव विरोधो वक्तव्यो न जातु भिन्नाधिकरणयोरिति । लोके क्वाप्यदर्शनात् । लोके तावत् समानाधिकरणयोरेव विरोधो दृश्यते न भिन्नाधिकरणयोरिति । भिन्नाधिकरणयोरपि विरोधश्चेदसेत्स्यत् । अन्तरितमपि तेजस्तिमिरं व्यरात्स्यत् । नच तथा विराध्यते । तस्मात्समानाधिकरणयोरेव विरोध इति । निराकारत्वसाकारत्वधर्मयोरपि समानाधिकरणयोरेव विरोधे वक्तव्ये तदत्यन्ताभावसमानाधिकरणात्मको विरोधः पुनश्चिरमुदास्ते धर्मयोः सामानाधिकरण्ये तदत्यन्ताभावसामानाधिकरण्यस्य दूरापास्तत्वात् । नहि निराकारत्वसाकारत्वधर्मयोः सामानाधिकरण्ये निराकारत्वात्यन्ताभावसामानाधिकरण्यं साकारत्वस्य साकारत्वात्यन्ताभावसामानाधिकरण्यं वा निराकारत्वस्य संभवति । संभवेच्चेत् धर्मयोः सामानाधिकरण्यमेव न स्यात् । अस्ति सामानाधिकरण्यमिति भवद्भिरेव विरोधो यथा स्यात्तथा व्याह्रियते । तथाच दुर्भाग्यविल-

सितः पुनरपराद्धान्तो वा विरोधासंभवो वेत्यवधातव्यं किं नो भूरिणा विस्तरेणेति ॥ ४ ॥

**तदेवं** तर्कोद्भावितस्य विरोधस्य निर्वक्तुमशक्यत्वादसद्विषयस्तर्कोऽपि युष्माकमतर्क एव न वाव तर्कप्रतिष्ठानं लभते । शिथिलात्मत्वादित्युदास्यते किं तर्कविषयेण तर्केणेत्यखिलं शुभ्रम् ।

**आस्तां** वा यौष्माकीणस्तर्कः सद्विषयो वाऽसद्विषयो वेति नाधिकं परीक्ष्यते । तथाप्यभ्युपगम्यमानस्तर्कः किं करिष्यतीति वक्तव्यम् । **अथा-**वोचाम प्रमाणानुग्रह इति । **मैवं वक्तव्यम्** । कस्मान्नैवं वक्तव्यम् । विकल्पासहत्वात् । कथम् । इत्थम् । तर्को हि प्रमाणानुग्राहकतयाऽभ्युपगम्यमानः परपक्षाभावप्रतीत्यात्मको वा स्यात् स्वपक्षसंभावनात्मको वेति । तत्र परपक्षाभावप्रतीत्यात्मकत्वे प्रतीतिरपि प्रमाणं वाऽप्रमाणं वेति वक्तव्यम् । प्रमाणं चेत्तर्हि तदात्मकस्तर्कोऽपि प्रमाणमेव । न वाव प्रमाणानुग्राहक इति । अप्रमाणं चेत् न वावास्मात्परपक्षाभावोऽपि निर्वर्तेत । अप्रमाणेन खलु कस्यचिदर्थस्य निर्वृत्तेरयोगात् । अथ स्वपक्षसंभावनात्मकस्तर्कश्चेत्तदा निरूपयितव्यं कस्मादेषा संभावनोत्पद्यते । किं स्वपक्षसाधकप्रमाणाद्वा परपक्षाभावप्रतीतेर्वेति । स्वपक्षसाधकप्रमाणाच्चेदेषोत्पद्येत तदाऽन्योन्याश्रयो दोषः प्रसज्येत । तर्केण विवेचिते विषये स्वपक्षसाधकप्रमाणप्रवृत्तेरभ्युपगमात् । परपक्षाभावप्रतीतेश्चेदेषोपजायेत । तदा परपक्षाभावप्रतीतिलिङ्गकमनुमानमेवैतदापद्येत न वावान्यत्किंचिदिति । कस्मात् । परस्परविरुद्धयोरेकतरप्रतिषेधस्येतरविधिनान्तरीयकत्वदर्शनात् । तथाचेश्वरस्य मूर्त्तिमत्त्वे निराकारत्वं नोपपद्यतेऽमूर्तित्वे तूपपद्यत इति प्रमाणानुग्राहकस्तर्कोऽपि भवतां वाचारम्भणमात्रमेव । न स्यात्प्रमाणाऽप्रमाणे वावातिशेते । प्रमाणं च प्रत्यक्षादिषु कस्मिंश्चिदन्तर्भविष्यतीति न पृथग्व्युदस्यते । तद्व्युदासेनैव तस्यापि व्युदाससंभवात् । अप्रमाणं च न वस्तुसाधकमिति किं तद्विलासेन । तस्मादमूर्तिरयमीश्वर इति प्रतिजानतां निराकारैकवादिनामध्यक्षवत् तर्कोऽप्यशक्यसंभाव्य एवेति निर्विघ्नं संसिद्धम् ।

**यत्नतस्तर्कितोऽप्यर्थः शुष्कतर्केण तार्किकैः ।**
**अभियुक्ततरैश्चान्यैरन्यथैवोपतर्क्यते ॥ १ ॥**

**तस्माच्छुष्केण तर्केण तर्कणीयं न वैदिकैः ।**
**शुष्कतर्कप्रतिष्ठानं लज्जायै केवलं यतः ॥ २ ॥**
**गौतमीयेषु सूत्रेषु तर्कश्चेत्सूत्रसूत्रितः ।**
**वेदशास्त्राविरोधेन तर्कणीयं न चान्यथा ॥ ३ ॥**

**अथानुमानं** प्रमाणमिति चेत् । न । हेत्वसिद्धेः । हेतुबलेन तावदनुमातारः किंचिदनुमिमते । यत्र हेतुरेवासिद्धस्तत्र किं केनानुमिमीरन् । तस्माद्धेतुर्वक्तव्यः । **निराकारत्वं** हेतुरितिचेत् । न । आभासत्वात् । तथाहि । मूर्त्तिमत्त्वाभावस्य साधनाय तावन्निराकारत्वं हेतूक्रियते "निराकारत्वादीश्वरो न मूर्तिमानिति । तच्च हेतुत्वेनोपन्यस्तं निराकारत्वमाकारेभ्यो द्रव्येभ्यो निष्क्रान्तत्वं वा स्याद् १ मूर्तिरहितत्वं वा स्याद् २ निःस्वरूपत्वं वा स्याद् ३ निरवयवत्वं वा स्यादिति ४ । **तत्राकारे**भ्यो द्रव्येभ्यो निष्क्रान्तत्वं निराकारत्वमितिचेन्मन्वते तदाऽनैकान्तिको हेतुर्न वाव साध्यस्य साधनाय पर्याप्त इति । किं कारणम् । मूर्तिमत्त्वाभावाभाववति शब्देऽपि तस्य सद्भावात् । शब्दो हि वर्णात्मको वा स्फोटात्मको वा संयोगाद्वा विभागाद्वा जायमानो वा व्यज्यमानो वा स्वतो वोपाधितो वा सर्वथाप्यम्बराद्वाऽनम्बराद्वा निष्क्रान्त एव जगति व्यवहाराय कल्पते न वावानिष्क्रान्त इति । चेदनिष्क्रान्तोऽपि जगति व्यवहाराय कल्पेत तदा भेर्यां वा मूकधियां वा वर्तमानोऽपि तथा प्रकल्पेत । परं न तथा प्रकल्पते । तस्मान्निष्क्रान्तोऽसौ समर्थो नानिष्क्रान्त इति । कस्मात्पुनर्निष्क्रान्तोऽसौ समर्थो नानिष्क्रान्त इति । श्रुत्यनुशासनात् । **"स भूरिति व्याहरत् स भूमिमसृजत स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत स मह इति व्याहरत् स दिवमसृजत"** इत्यादिका हि भगवती तैत्तिरीयकी श्रुतिः । सा च भूरादिशब्दानां व्याहारेण भूम्यादिसर्गं दर्शयन्ती जगत्स्रष्टुः प्रजापतेर्भूरादयः शब्दा एव पुरस्तान्निश्चक्रमुः पश्चाच्च तेभ्यो भूम्यादयो लोका इत्यनुशास्ति । तस्या इत्थमनुशासनान्निष्क्रान्त एव समर्थः शब्दो नानिष्क्रान्त इत्येतत्तावदङ्गीकर्तव्यम् । कस्मात् । यस्मात्सा लोकोपकृतये वर्तमाना न लोकसीमातिलङ्घनी सती किंचि-

---

(१) तै. ब्रा. २. २. ४. २.

तत्र कारणमीश्वरः कार्यं च जीवः तयोश्च समानगुणकत्वाभावदर्शनात् कुम्भस्य कारणं मृदिव कथमीश्वरस्तदारम्भकारणं युज्येत, कथं वा तत्र भवदुक्तमुपपद्येत संभवाभावात्।

**प्रकृत्या सह सारूप्यं विकाराणामवस्थितम्।**
**जीव ईशसरूपश्च नेति नो तस्य विक्रिया ॥ १ ॥**
**ईश्वरः सुखरूपो हि जीवो दुःखस्य भाजनम्।**
**तत्कथं कथय सिध्येत्तावकीनो मनोरथः ॥ २ ॥**

**भवतु** वा जीवप्रकृतिरीश्वरो नच तत्र विविवदिष्यते। किं तर्हि। यदवशिष्टं तत्पृच्छ्यते। किंतदवशिष्टं यत् पृच्छ्यते। इदमेव पृच्छ्यते। "यज्जीवप्रकृतिरीश्वरोऽभ्युपगम्यते सच सावयवो वा स्यान्निरवयवो वा स्यादिति। तत्र सावयवश्चेदभिलष्येत। तदा स्वयमेवेश्वरो नश्येत्। कस्मात्। सावयवस्य नाशाश्रयत्वनियमात्। यस्तावत्सावयवः सच नश्यत्येव। यश्च नश्यत्येव सच सावयव एवेत्यस्ति लौकिको नियमः। यथा हि वाव लौकिका घटपटादयोऽर्थाः सावयवा नाशाश्रया दृश्यन्ते। नच तत्र कश्चिद्विप्रतिपद्यते कथमेतदेवमिति। तथा जीवप्रकृतिरीश्वरोऽपि सावयवश्चेदसेत्स्यत् अवश्यमेव व्यनंक्ष्यत्। नच नित्यमवस्थास्यत्। स्थास्नुर्नाशरहितश्चेश्वर इत्यस्ति सार्वभौमो राद्धान्तः। तत्कथं सावयवेन तेन जीवः प्रक्रियेत, कथं वा स्वेन पुनर्निरन्तरं जिजीविष्येत। तस्मादसाधुरयमभ्युपगमो "यज्जीवप्रकृतिरीश्वरः सावयवः' इति।

**अथ** जीवप्रकृतिरीश्वरो निरवयवश्चेदभिलप्येत। तदा सुतरां मूलमुच्छिद्येत नकिंचिदप्यवशिष्येत। कस्मात्। कात्स्न्र्येन परिणामत्वप्रसंगात्। यः खलु सावयवः पदार्थः सचैकशः परिणन्तुं वा तदन्यतश्चावस्थातुं वा पारयते। विभागार्हत्वात्। यः पुनर्निरवयवः पदार्थः स च विभागानर्हत्वात् कुतो वा परिणमेत्, कुतो वावतिष्ठेत। नहि कश्चन निर्विभक्तो निरवयव एकतः परिणमति तदन्यतश्च तिष्ठतीति शक्यसंभवम्। जीवप्रकृतिरीश्वरोऽपि चेत्पृथिव्यादिवत्सावयवोऽभविष्यत् तदाऽवयवशः पर्यणंस्यत्। अवयवशश्च अवस्थास्यत। नच जीवप्रकृतिरीश्वरः सावयवोऽभ्युपगन्तुं शक्यते। नाशप्रसङ्गादनवस्थानाच्च। तत्रावयवशः परिणामावस्थानयोरसंभवेन कृत्स्नपरिणामप्रसक्तौ सत्यां कथं

न मूलोच्छेदः प्रसज्येत । कथं वा जीवभावादीश्वरोऽवशिष्येत । समस्तस्यैव जीवरूपेण परिणतत्वात् । अन्यथा सावयववादप्रसङ्गाच्च । तथाच किमु वक्तव्यो वृद्धिमिच्छतां युष्माकमुभयथापि मूलापक्षयलक्षणः कष्ट इति ।

**अथ** स्यादेतत् चेत्कुम्भस्य कारणं मृदिवेश्वरो जीवारम्भकारणं प्रोच्येत । नच तथा प्रोच्यते । किं तर्हि । कुम्भकार इवेश्वरो जीवारम्भकारणमिति । तत्क नु कष्टागमः क वा मूलापक्षय इति । **नैत**त्साधूपन्यस्यते । कस्मात् । असामञ्जस्यात् । द्वौ हि वाव सृष्टिस्रष्टारौ लोकतोऽवगम्येते । एको जीवस्तदपरश्चेश्वर इति । तत्र जीवः खलु रागद्वेषादिदोषाक्रान्तचेतस्त्वात्कथंचिद्विषमां सृष्टिं संसृजेताऽपि न नोपपद्यत इति । विस्मयाभावात् । दृश्यते हि द्विष्टश्चैत्रो मैत्रं दुःखाकरोति रक्तश्च स्त्रियं सुखाकरोतीति । तत्किमाश्चर्यं दोषप्रयुक्तो निर्मिमाणोऽपि किंचिद्विषमीकुर्यात् । अकारणं वा द्विष्यादिति । तदपरस्तावदीश्वरस्तु रागद्वेषादिदोषनिर्मुक्तो नित्यं समदर्शनः करुणैकमूर्तिर्न स्याद्वाव विषमां सृष्टिं निर्वर्तयितुं प्रविवर्तिषते । प्रयोजनाभावात् । नहि तस्य कश्चिद्द्वेष्योऽस्ति प्रेयो वा विद्यते । स हि नित्यं समदर्शनो निखिलशक्तिसंपन्नः कथंचित्स्वीयानात्मजान्निर्मातुकामः सन् प्रवर्तेतापि नकाँश्चित् दुःखबहुलान् सुखबहुलान्वा काँश्चिन्निर्मिमीत । किंतर्हि । दुःखबहुलान्वा सुखबहुलान्वा सर्वानविशेषेण निर्मिमीतेति । किं कारणम् । समदर्शित्वात्, रागद्वेषादिदोषरहितत्वाच्च । दृश्यन्ते तु केचन जीवात्मानो दुःखबहुलाः पश्वादयः सुखबहुला वा देवादयस्तदुभयबहुला वा मनुजादय इति । नचैते हीनोत्तममध्यमभोगभाजो जीवभेदाः कथंचन निरपेक्षेणेश्वरेण निर्मीयन्ते; निर्मिता वा कचिद्विद्वद्भिः स्वीक्रियन्ते । चेदिह भवदुक्त्या तन्निर्मिता एवोत्प्रेक्षेरन् । उत्प्रेक्षिता वा कचिद्विद्वद्भिः स्वीक्रियेरन् । तदा वक्तव्यं भो विषमां सृष्टिं निर्मिमाणस्य तस्य समदर्शित्वं कथमुपपद्येत कथं वा पृथग्जनस्येव रागद्वेषादिदोषवत्त्वं न प्रसज्येत । यत्कारणं रागद्वेषादिदोषभागेव विषमीकर्तुं समीहते नतद्रहित इति । यदीश्वरोऽपि रागद्वेषादिवशगो भवन् जीववत्खलजनैरपि जुगुप्सितं विषमीभावं भावयितुं समीहेत । तदा नासौ वैदिकानामीश्वरः संभवेत् । किमुत भवतामेव । कस्मात् । रागद्वेषादिदोषाणां तल्लिङ्गत्वाभावात् । जीवलिङ्ग-

त्वस्य च तेषां निर्धारणात्। भवति चैषा निर्धारणा "यद्रागद्वेषादिकं जीवस्यैव लिङ्गं नचेश्वरस्येति। तद्यथा शास्त्रकृतां सूत्रम्

**न्याय. अ. १ आ. १ सूत्र. १०**

**"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति।**

तथाच रागद्वेषादिदोषाणां भगवति तस्मिन्नसंभवेन विषमकारित्वस्याशक्यसंभाव्यतया कथं स चित्रभोगभाजां जीवानामारम्भकारणं संभवेत्। कथं वा शुद्धहृदयो भगवान् संचक्ष्यान्यत्कारणं दुःखयोगविधानात् वैषम्यनैर्घृण्याभ्यां संयुज्येत। नहि पथः शुचेर्दर्शयिता भगवानीश्वरो मलीमसीं पद्धतिमादत्ते। तस्मान्नैतत्समञ्जसं "यत्कुम्भकार इवेश्वरो जीवारम्भकारणमिति"।

**किंचा**परमुच्यते। कुम्भकार इव जीवारम्भकारणमीश्वरो निःसहायो वा स्यात्ससहायो वा स्यादिति वक्तव्यं। न तावन्निःसहाय इति वक्तुं पार्यते। किंकारणम्। प्रकृतिसहायस्यैव कार्यारम्भकत्वदर्शनात्। नहि निःसहायः कश्चित्प्रकृतिमनपेक्षमाणः कार्यारम्भको दृश्यते। कुम्भकारोऽपि वाव कुम्भमारभमाणो मृदमपेक्षत एव। ईश्वरोऽपि चेज्जीवमारिप्सेत तदावश्यं तत्प्रकृतिमपेक्षेतेति। **स्यादेतत्**। शक्तिहीनत्वात्कुम्भकारो हि कुम्भमारभमाणस्तत्प्रकृतिमपेक्षते। भगवतः परमेश्वरस्य तु कर्तुमकर्तुमन्यथा वा कर्तुं शक्तत्वाज्जीवारम्भणे प्रवर्तमानस्यापि न किंचिद्बाह्यमपेक्षितव्यमस्ति। स हि सत्यसंकल्पः यदा संकल्पयति भवताद्भवत्येव। यदा संकल्पयति नश्यतान्नश्यत्येव। यस्य वाव स्वसंकल्पादेव सर्वसंभवः सच तस्मै तस्मै कार्याय प्रवर्तमानोऽपि किं बाह्यमपरमपेक्षेत। नहि तस्य किंचिदनुपपन्नं नाम। लोकोत्तरत्वात्। युक्तं चैतत्। अन्यथा कार्यारम्भणे जीववत्प्रकृतिमपेक्षमाणः कश्चिज्जीव एव प्रसज्येत नत्वीश्वर इति। नहीश्वरश्च कार्यारम्भणे तत्प्रकृतिमपेक्षते चेति युक्तं भाषणं। लोकसीमानुरोधस्य जीवगोचरत्वेन तल्लङ्घनस्य लोकोत्तरे तस्मिन्नकिंचित्करत्वात्। अतएवोक्तं **महर्षीशसा**पिधर्मपुस्तके—

**"सामर्थ्याद्द्भुतादेव मामकीनः पिता प्रजाः।**
**पुत्रस्वाराज्यकामेन निर्ममे निखिलाः प्रजाः १"** इति।

**अत्राचक्ष्महे**। नूनं पदार्थविद्यानभिज्ञतयेत्थं निरर्गलं यथा स्यात्तथा

---

१ ईशोऽवतिष्ठते यस्मिन्नीशे यश्चावतिष्ठते॥
स ईशा इति भाषायामार्य्याणान्तु निगद्यते॥ १॥

भाष्यते। यदि किंचिदपि पदार्थविद्यायास्तत्त्वं जानीध्वं न स्यादित्थं भाषेध्वं। मन्यामहे सत्यसंकल्पो भगवानीश्वरः। स यदा सङ्कल्पयति भवताद्भवत्येव नश्यतान्नश्यत्येवेति। तथापि तत्संकल्पो वाव संकलितव्यः। कथं स सङ्कल्पयते भगवानीश्वर इति। किमसतः सद्भवतात्सतो वा सद्भवतादिति। न तावदसतः सद्भवतादिति सङ्कल्पो युज्यते। कस्मात्। व्याघातात्। भवति तावद्व्याघातोऽसदपि स्यात्सदपि स्यादिति। नच क्वचिदसत्सद्भवति सद्वाऽसद्भवतीति वीक्ष्यते। चेत्पूर्वमसत्पश्चात्सद्भवतादिति सङ्कल्पेत तदा कथं न व्याहन्येत। कथं वा परीक्षकैर्नोपेक्ष्येत। तथाऽसतो वा सज्जायेतेत्यपरो व्याघातः। कथमसतः सज्जायेतेति। नहि सदभावात्सद्भवतीत्युपपद्यते। यत्र वाव यस्य सर्वथाऽभावोऽस्ति कथं स तत्रोत्पद्येत। चेदुत्पद्येत तदा पीडनेन सिकतासु तैलमप्युत्पद्येत। दण्डादिव्यापारेण च तन्तुषु कलशमप्युपजायेत। न च तैलमुत्पद्यते नवा कलशमुपजायते। तदा कुतस्तु सौम्यैवं स्यात्। कथं वाऽसतः सज्जायेतेति। चेदसत एव सज्जायेतेति मन्येत तदाऽसदन्वितमेव सर्वं कार्यं प्रसज्येत। नसदन्वितं किलापद्येत। सदन्वितं चापद्यते घटः सन् पटः सन्निति। तत्कथमेवं मन्येत कथं वा भवदुक्तं न व्याहन्येत। सत्यसंकल्पो वावेश्वरस्तेन यत्सङ्कल्प्यते तत्सत्यमेव सङ्कल्प्यते नासत्यमिति। तत्सङ्कल्पितं चेदसतः सद्भवतादिति। तदा नित्यमेकान्तेनासत एव सदुद्भवेत् न जातु सत एव सद्भवेदिति। तत्सङ्कल्पस्यान्यथाभावाऽसंभवात्। परं न तथाऽसतः सद्भवनमद्यापि क्वचिदवलोक्यते। नवा सांप्रदायिकैः पाश्चात्यैरपि क्वचिदित्थं युक्तिभिश्चोपढौक्यते। सतो वाव सद्भवनं तु प्रत्यक्षेणैवोपलभ्यते। तत एव न तत्र कश्चित्तैर्थिकोऽपि विप्रतिपद्यते। कस्मात्। निदर्शनबाहुल्यात्। अस्ति खलु सतः सद्भवने निदर्शनबाहुल्यं। तद्यथा मुसलावघातेन सद्भ्य एव धान्येभ्यस्तण्डुलानां दोहनेन वा सौरभेयीभ्यः सतीभ्यः पयसां सद्भूतानामेवोद्भवनमिति। नचेत्थमसतो वा सद्भवने किंचिन्निदर्शनं विद्यते। तद्वक्तव्यं कथं न व्याहतः सङ्कल्पः कथं वा नापरो व्याघात इति।

**किंच** यत्कार्यं भवति तत्साधारमेव भवति न निराधारं वाव भवतीत्यस्ति व्याप्तो न्यायः। तद्यथा कार्यं ज्ञानेच्छाकृतय इति। तत्सर्वं जीवाधारमिति। सच्च कार्यं, तदपि साधारमेव वक्तव्यम् न निराधारमिति। कार्यत्वव्या-

घातात्। तत्रापि सदसदाधारं वा सदाधारं वेति पुनर्निर्वाच्यम्। न तावदसदाधारं सदिति युक्तमुच्यते। संभवाभावात्। कार्यं ह्युद्गच्छत्कारणमधिकुरुते पुनरपिगच्छद्वा कारणमप्ययते। चेत्तदसत्स्यात्कथं सत्तदधितिष्ठेत्। कथमपिगच्छद्वा सत्तत्र लीयेत। नहि लोके सतोद्गच्छता कचिदसदधिष्ठीयते। कचिदपीतौ वा तत्र लीयते। यस्य वावाधारयोग्यतैव नास्ति स च कथमाधारः संभवेत्। यदि संभवेत् तदा शशविषाणादयोऽपि केषांचिदाधारः संभवेयुः। नच ते संभवन्ति। तत्कथमेतदपि संभवेत्। तस्मादसदाधारं सदिति रिक्तं वचः।

**अथ** सदाधारं सदिति चेदुच्यते तदा किं तत्सत्स्यात्। ईश्वरो वा प्रकृतिर्वेति वक्तव्यम्। न तावदीश्वर इति। निमित्तत्वात्। निमित्तं च न कार्याधिकरणमिति। प्रकृतिः सदितिचेत्तदाऽसतः सद्भवतादिति सुतरां व्याहतः सङ्कल्पः। असतो जातस्य सदाधारत्वासंभवात् तज्जातस्य तदाधारत्वनियमाच्च। नह्यतज्जवतं तदाधारमिति न व्यापद्यते। व्यापद्यमानं वा सिद्धान्ततां प्रतिपद्यत इति। तस्मादसतः सद्भवतादित्ययुक्तः सङ्कल्प इति युक्तमुक्तम्।

**अथ** सतः सद्भवतादिति चेद्भगवता सङ्कल्प्यते तदा सतः सदुत्पत्तिं सङ्कल्पयता भगवतेश्वरेण सहायभूता जीवप्रकृतिरप्यपेक्षितैव न वावानपेक्षितेति। सतः कारणात् कार्यं सज्जायतामिति स्वेनैव सङ्कल्पनात्। **नन्ववदाम** कार्यमारभमाणो भगवानीश्वरश्चेज्जीववत्तत्प्रकृतिमपेक्षेत तदा जीव एव कश्चित्प्रसज्येत नत्वीश्वर इति। **नैष दोषः।** कामयितृत्वेनापि तुल्याक्षेपसंभवात्। चेज्जीववदीश्वरोऽपि कामयेत तदा जीव एव कश्चित्प्रसज्येत नत्वीश्वर इति। नहीश्वरश्च कामयते चेति युक्तं भाषणम्। कामस्य जीवधर्मत्वदर्शनात्। लोकोत्तरस्य च तस्य तदयोगात्। यथा हि वाव सृष्टिं वा पुत्रस्वाराज्यं वा जीववत्कामयमानोऽपि भगवानीश्वरो न कश्चिज्जीवः प्रसज्यते। किमुत। ईश्वरएव। तथा कार्यारम्भणे तत्प्रकृतिमपेक्षमाणोऽपि न कश्चिज्जीवः प्रसंक्ष्यते। किमुत। ईश्वरएवेति। विस्तरेण चैतदबूबुधा**मार्यसिद्धान्ते**ऽदूदुषां च पुष्कलेन **कस्ते वादः** इत्यादिना प्रकृत्यनपेक्षवादं तत्रैवेति कृतमिह तत्प्रपञ्चेन। तस्मादकिंचिदेतत्। यन्निःसहायो जीवारम्भकारणमीश्वर इति।

**नापि** ससहायो भगवानीश्वरो जीवारम्भकारणमिति वक्तुं शक्यते। किं कारणम्। सहायानिरूपणात्। तथाहि। योऽसौ जीवप्रकृतीभूतः सहायो भगवतः परमेश्वरस्योच्यते सच तस्य कामो वा स्याद्भूतानि वा स्यादिति वदितव्यम्। न तावदीश्वरस्य कामो जीवप्रकृतित्वेन सहाय इति साधूद्यते। कस्मात्। कामस्य गुणत्वेन द्रव्यारम्भकत्वाभावात्। द्रव्यं हि खलु द्रव्यमारभते नचाद्रव्यम्। जीवश्च ज्ञानादिगुणयोगाद्द्रव्यम्। स चेदारभ्यः स्यात्तर्हि द्रव्येणैवारभ्यः स्यात् नचाद्रव्येणेति। कामश्च गुणत्वादद्रव्यं। तत्कथं जीवस्तेनारभ्यो भवेत् कथं वा गुणो द्रव्यमारभेत्। द्रव्याणां द्रव्यान्तरारम्भकत्ववद्गुणानामपि गुणान्तरारम्भकत्वनियमात्। तद्यथोक्तं वैशेषिकदर्शने. **अ० १ आ० १ सूत्र १०–**

**"द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च**

**गुणान्तरमिति।**

**ननु** जीवस्य कामो द्रव्यारम्भको माभूदीश्वरस्य कामस्तु तदारम्भको भविष्यत्येव। तद्गुणानां कार्यत्वावच्छिन्नं प्रति कारणत्वाभ्युपगमात्। **न**। निमित्तमात्रत्वात्। सत्यमीश्वरस्य गुणाः कार्यमात्रं तावदारभन्ते तथापि निमित्ततया न प्रकृतितयेति भेदोऽवगन्तव्यः। प्रकृतितया कारणत्वाभ्युपेतव्ये तु गुणानां गुणान्तरारम्भकत्वनियमादीश्वरोऽपि जीवभावेन परिणमन्कूटस्थनित्यतां जह्यादिति पुरस्तादेवाचक्ष्म तन्न विस्मर्तव्यमिति। तथाचेश्वरस्य कामो जीवप्रकृतितया सहाय इत्यसाध्वेतत्।

**नापि** भूतानि तत्प्रकृतितया तत्सहाय इति सम्यगुच्यते। किं कारणं। चेतनत्वाभावप्रसङ्गात्। अस्ति तावच्छुक्लाशुक्लकर्मफलभुग्देहेन्द्रियादिपञ्जराध्यक्षश्चेतनो जीवः। न तत्र कश्चिद्विप्रतिपत्तुमर्हति चेतनो वा स्यादचेतनो वा स्यादिति। यत्कारणं स्वयं विश्वस्य साक्षीति। स चेद्भूतप्रकृतिको विद्येत बलादचेतनः प्रसज्येत। किं कारणम्। भूतप्रकृतिकस्य भावस्याचेतनत्वदर्शनात्। यः खलु भूतप्रकृतिको भावः सचाचेतनो दृष्टः। यथा घटः पटो मठ इति। जीवोऽपि भूतप्रकृतिकश्चेदभविष्यत्। अवश्यमचेतनोऽसेत्स्यत्। नह्यचेतना प्रकृतिरात्मनीनमपि कार्यं चेतयितुमर्हति सामर्थ्याभावात्। अचेतनानि च जीवप्रकृतीभूतानि भूतानि। तत्कथमेनं चेतयेयुः।

**नच** वाच्यं चेतनानि भूतानि तथापि तच्चैतन्यं नित्यं नोद्बुध्यते। यदा पुनरिमानि चित्राकृतीनि सन्ति संघ्नन्ति तदा तदुद्बुध्यते। यथाहि मादकत्वशक्तिः प्रत्येकमनुद्भूतापि सांहत्ये सत्युद्बुध्यत इति। विभ्रममात्रत्वात्। मरणसुषुप्त्याद्यभावप्रसङ्गाच्च। प्रपञ्चस्त्वधिकोऽस्य वैज्ञानके सांख्यप्रवचनभाष्ये न्यायवार्तिकतात्पर्यटीकायां वा द्रष्टव्यः कृतमिह तद्विस्तरेणेति। तदेवं सहायानिरूपणात् ससहायोऽपि भगवानीश्वरो न जीवारम्भकारणमिति शक्यवचनम्। यदा वाव निःसहायो वा ससहायो वा भगवानीश्वरो न जीवारम्भकारणं संभवति तदाऽन्यदारम्भकारणं संभवतीति किमु वक्तव्यम्। नैतद्वक्तव्यं। तन्निरूपणस्याप्यशक्यत्वात्। तथाचेश्वरादिकारणाजन्यत्वादनारभ्यो जीवः कथं सावयवः स्यात् कथं वा निरवयवो न स्यात्। यदा खल्वारभ्यत्वाभावान्निरवयवोऽयं जीवात्मा न स्यात्सावयव इति। तदा साध्याभाववति तस्मिन्वर्तमानो निरवयवत्वं हेतुस्तावत्कथं न साध्यं व्यभिचरेत्। कथं वाऽनैकान्तिको न विद्येत। साध्यव्यभिचारेणैव हेतोरनैकान्तिकत्वनिर्णयात्। तथाच वक्तव्यम्। कथं स सव्यभिचारोऽनैकान्तिको भूत्वा साध्यं साधयितुं पारयेत् कथं वा मूर्तिमत्त्वाभावं तत्र साधयेदिति। यथा चानैकान्तिको हेतुर्न कथमपि साध्यं साधयते तथा पूर्वस्मिन्कल्पे विस्तरेणालेखि तदलमिह पुनरालेखनेन।

**हेतुः साध्यवदन्यस्मिन्नपगच्छेद्यदि स्वयम्।**
**साधयेत्स कथं साध्यं वाच्यं किं तत्र तावकैः॥ १॥**
**न चानैकान्तिको दृष्टः साधको हि महाधियः।**
**कल्पनीयं न चादृष्टं युज्येरन्किं त्वदुक्तयः॥ २॥**

तदेवमीश्वरो न मूर्तिमान्निराकारत्वादिति निराकारत्वहेतोरनैकान्तिकत्वादिदोषदुष्टतया मूर्तिमत्त्वाभावानुमापकत्वाभावादनुमानं तत्र प्रमाणमित्येतदपि भवतां साहसमेव न तत्र किंचित्तत्त्वमस्तीति कृतमधिकेनाधिकज्ञेषु।

**स्यादेतत्**। माभूद्व्यभिचारादिदोषदूषितशक्तितया मूर्तिमत्त्वाभावस्य साधको निराकारत्वं हेतुः, **व्यापकत्वं** हेतुस्तु भगवति तस्मिन् मूर्तिमत्त्वाभावं साधयिष्यति। यत्रयत्र व्यापकत्वं तत्रतत्र मूर्तिमत्त्वाभाव

इति निश्चितव्याप्तित्वेन साधकतमत्वात् । साधकतमं च करणमित्यस्ति पाणिनीयमपि दर्शनम् । तद्यथा. **अष्टा. अ. १ पा. ४ सू. ४२**
**"साधकतमं करणमिति."** तथाच प्रयोगाकारः "यो यो व्यापकः स स मूर्तिमत्त्वाभाववान् यथा कालो दिग् व्योमेति. व्यापकश्चेश्वरः तस्मान्मूर्तिमत्त्वाभाववानिति ।

**अत्र ब्रूमहे ।** न तावद्व्यापकत्वं हेतुस्तत्र मूर्तिमत्त्वाभावं साधयिष्यति । किंकारणम् । तस्य विपक्षतो व्यावृत्तेरनवगमेन साधकतमत्वाभावात् । यस्य वाव हेतोर्विपक्षतो व्यावृत्तिर्नावगम्यते । किमुत । वृत्तिरेवावगम्यते नासौ साधकतमो हेतुरिति । किं कारणम् । साध्यपरिहारेण तदभाववति विपक्षे वर्तमानतया सर्वलक्षणोपपन्नत्वाभावात् । सर्वलक्षणोपपन्नश्च हेतुः साधकतमो भवति नासर्वलक्षणोपपन्न इति । व्यापकत्वं हेतुरपि साध्याभाविनो विपक्षान्न व्यावर्तते । किंकारणम् । मूर्तिमति जीवेऽपि तस्य वर्तमानत्वात् । अस्ति व्यापको जीवो मूर्तिमाँश्चेति वैदिको राद्धान्तः । तथाच साध्यं व्यभिचरन् विपक्षे वर्तमानो व्यापकत्वं हेतुः सर्वलक्षणोपपन्नत्वाभावात्कथं साधकतमो विद्येत । साधकतमत्वाभावे वा कथं साध्यं साधयेदिति ।

**नन्व**संबद्धमुच्यते "व्यापको जीव इति । यदि व्यापको जीवः सिध्येत् तदैतत्सर्वं संभवेत् । नचास्ति व्यापको जीवः । किमुत । अणुरिति । तथाहि ।

**फलाभावादयुक्तत्वात्साङ्कर्यात्सुखदुःखयोः ।**
**तिरस्कृत्य विभुवादमणुवादः समर्थ्यते ॥ १ ॥**

शरीरस्य चेष्टया हि वाव चेतनो जीवोऽधिगम्यते "भवति कश्चिच्चेतनो जीव इति । यदि वाव तदधिष्ठाता कश्चिच्चेतनो जीवो न भवेत् नैतदचेतनं शरीरं सहसा हितमारभेत । अहितं वा परिहरेत् । नहि हितस्यारम्भणमहितस्य च परिहरणं चेतना संबन्धमन्तरेण चेतनाशून्यस्य संभाव्यते । योग्यताविरहात् । यस्य वाव यत्र योग्यतैव नास्ति तत्किं तत्र संभाव्येत । योग्यताहीनं च केवलं शरीरमिति तद्यया चेतनया शक्त्याऽधिष्ठितं सन्नित्यं नूनं विचेष्टते सेयं चेतनाशक्तिर्जीव इति । तद्यथोक्तमत्रभवद्भिः प्रशस्तपादाचार्यैरपि भाष्ये ।

**"शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरिहार-योग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत्प्रयत्न-वान्विग्रहस्याधिष्ठातानुमीयत"** इति।

सोऽयं शरीरस्य चेष्टयाऽनुमीयमानो जीवोऽणुर्वा स्याद्विभुर्वा स्यादिति मीमांसितव्यं भवति। कृता मीमांसा। न तावद्व्यापको जीव इति मीमांसया पर्यवस्यति। किं कारणम्। **फलाभावात्** शरीरचेष्टोपपत्त्यर्थं तावज्जीवः कल्प्यते. सा च यावता जीवेन साधूपपद्येत तावानेव जीवः कल्प्येत नाधिको नापि न्यून इति। नच कल्प्यमानो व्यापको जीवः सर्वतः शारीरकचेष्टायामुपयुज्यते तस्य शरीरावच्छेदेन कथंचिच्चेष्टायामुपयोगेऽपि तद्बहिरवच्छेदेन वर्तमानस्यानुपयोगात्। नहि शरीराद्बहिर्देशावच्छेदेन वर्तमानो जीवश्चेष्टायामुपयुज्यते। शरीरे वा किंचिदुपकुरुते। यस्य वाव शारीरकचेष्टायामुपयोगो नास्ति नान्यो वा कश्चिदुपकारोऽस्ति किं तदभ्युपगमेनेति न विजानीमः। श्रीमन्त एवात्र मध्यस्था भवन्तु। चेद्व्यापको जीवः कल्पयितव्यो भवेत्तदा शरीराद्बहिर्देशावच्छेदेन वर्तमानोऽसौ किं फलयेत् किं वा लाभयेदिति। न हि तस्य शारीरकक्रियायामुपयोगोऽस्ति। तस्याः शरीरावच्छिन्नेनैव निर्वाहसंभवात्। प्राणादिक्रियायां चैष समानश्चर्चः। नाप्यन्यत्किंचित्फलमुपलभ्यते तत्किं कल्प्यमानेन व्यापकेनेति।

**चेद्वा**ऽयं सर्वासु दिक्षु वर्तमानं पदार्थजातं याथातथ्येन विजानीयात् तदापि व्यापकस्यास्य व्यापकत्वं सफलं भायात्। परं न तथा विजानातीति किं तस्य व्यापकस्य व्यापकत्वेन निरर्थकेन। **ननु** व्यापकोऽप्यसौ यावान्मनसा संयुज्यते तावानेव चेतयते तावानेव कामयते तावानेव यतते तावानेवोपकुरुते नाधिको नापि न्यून इति। **नोच्चै**र्वक्तव्यम्। हन्त यावाँश्चेतयते यावान्कामयते यावान्यतते यावानुपकुरुते तावानेव जीव इति। चेतनाद्यधिकरणत्वात्। अधिकस्य च तदनधिकरणत्वेनाजीवत्वात्। नहि चेतनाद्यनधिकरणमात्मेति विभुवादिनोऽप्यभ्युपयन्ति। तेषामपि चेतनाद्यधिकरणत्वस्यैवात्मलक्षणत्वाभ्युपगमात्। चेतनाद्यधिकरणं च मनःसंयुक्तो जीवः स च यावन्मनस्तावानेव भवितुमर्हति नाधिक इति।

मनश्च परिच्छिन्नमिति तत् परिशिष्टस्तद्युक्तश्चेतनादिमान् जीवोऽपि परिच्छिन्नोऽणुरेवेति संश्लिष्यते । न वाव विभुरिति । निष्फलत्वात् ।

**अस्माद्देहादयं यावान् बहिर्जीवः प्रवर्तते ।**
**किं फलं तस्य वक्तव्यमणुवादासहिष्णुभिः ॥ १ ॥**

**किंच** जीवो वाव द्रष्टा श्रोता मन्ता कर्ता विज्ञानात्मा पुरुष इति । स च शाश्वतो वाऽशाश्वतो वा भ्रमाद्वा प्रमादाद्वा शुभं वाऽशुभं वा कर्म कुर्वन्नस्माल्लोकादमुं लोकममुष्माल्लोकाच्चेमं लोकं गच्छत्यागच्छति चेत्यस्ति शास्त्रविदां स्थितिः । नच तत्र कश्चिदपि विप्रतिपत्तुमर्हति । पाश्चात्त्यो वा स्याद्दाक्षिणात्यो वा स्यादार्यो वा स्यादनार्यो वा स्यात् सर्वेषां वाव वैदिकानामवैदिकानां च तेषां स्वकृतकर्मफलभोगायैतल्लोकादमुष्मिंल्लोकेऽमुष्माल्लोकाच्चैतस्मिंल्लोके जीवगमनागमनयोः सर्वथा संमतत्वात् । किं तल्लोकं किंवा परलोकमित्यन्यदेतत् । तथाप्यैहिकं वामुष्मिकं वा दैहिकं वा मानसं वा सुखं वा दुःखं वा संभोक्तुं जीवो गच्छत्यागच्छति चेति तुल्यमेतत् । तथाच तत्रार्यशास्त्रम् **यजु. अ० ४० मं० ३**

**"असुर्य्या नाम ते लोका अन्धेन तमसा वृताः ।**
**ताँस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः" ॥ ३ ॥**

**ऋ० अष्ट० ८ अ० १ वर्ग २३ मं० ६**

**"असुनीते पुनरस्मासु चक्षुः**
**पुनः प्राणमिह नो धेहि भोगम् ।**
**ज्योक् पश्येम सूर्यमुच्चरन्त-**
**मनुमते मृळया नः स्वस्ति" ॥ ६ ॥**

**"ये वै केचास्माल्लोकात्प्रयान्ति चन्द्रम-**
**समेव ते सर्वे गच्छन्ति" ।**

**बृह. अ. ६ ब्रा. ४**

**"तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे"** इति ।

**तेन** लोकाद्गच्छन्वा परलोकादागच्छन्वा जीवो वाव गमनागमनयोः कर्ता व्यवतिष्ठते । गच्छतेः कर्तृस्थक्रियात्वनियमात् । तत्र व्यवस्थिते

वाव गमनागमनयोर्जीवकर्तृकत्वे किं ते व्यापकस्योपपद्येते परिच्छिन्नस्य वेत्येतत्तावद्विवेचनीयं भवति । वृत्ता वाव विवेचना "नच ते व्यापकस्योपपद्येते इति । किं कारणम् । **अयुक्तत्वात्** । परिच्छिन्नो हि वाव चलनाश्रयत्वाद्गच्छति चागच्छति च न व्यापक इति । नहि व्यापकस्य कथमपि चलनमवकल्प्यते । येन गच्छेद्वागच्छेदिति । यदि वाव कश्चिद्वावदूको व्यापकेऽपि चलनमवकल्पेत । तदा नाऽसौ व्यापको विद्येत । किमुत । परिच्छिन्न इति । किं कारणम् । यत्कारणं परिच्छिन्नस्यैव क्रियाश्रयत्वमाचार्यैः प्रतिपाद्यते न व्यापकस्येति । तद्यथोक्तं प्रशस्तपादाचार्यैः साधर्म्यवैधर्म्यनिरूपणप्रकरणे भाष्ये ।

**"क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानि" इति ।**

यदा वाव क्रियाश्रयत्वाभावान्न व्यापकस्य चलनमवकल्पते तदा कुतस्तरां तत्र गमनागमने संभवेताम् । नह्यचलतोऽपि कचिद्गमनागमने संभवतः संभाव्येते वेति । तस्माद्व्यापके जीवे न गमनागमनयोर्युक्तत्वं पश्यामः । किमुत । परिच्छिन्न इति । सति च परिच्छेदे न शरीरपरिमाणो जीव इति वक्तुं शक्यते । तस्य जन्यत्वनियमेनानित्यत्वप्रसङ्गात् । जीवजन्मनश्च पुरस्तादेव निरस्तत्वात् । परिशेषादणुरात्मेति गम्यते न विभुरिति ।

**जीवो गच्छति चागच्छतीति भो वेदडिण्डिमः ।**
**व्यापकश्चेत्कथं गच्छेदागच्छेत्कथयेति नः ॥ १ ॥**

**किंच** व्यापकोऽपि जीवो नाम नाना वा स्यादेको वा स्यादिति निर्णेतव्यम् । तत्र न तावदेको जीव इति सम्यङ् निर्णीयते । किंकारणम् । व्यवस्थालोपप्रसङ्गात् । अस्ति वाव कश्चिज्जातः कश्चिन्मृतः कश्चित्सुप्तः कश्चिज्जागरितः कश्चिदाढ्यः कश्चिदनाढ्यः कश्चित्सुखी कश्चिद्दुःखी कश्चिद्विद्वान् कश्चिदविद्वान् कश्चित्सात्विकः कश्चित्तामसः कश्चिदुच्चाभिजनः कश्चिन्नीचाभिजन इत्यादिका लौकिकी व्यवस्था । नच सा सहसा प्रत्याख्यातव्या भवितुमर्हति । दृष्टविषयत्वात् । चेत्सर्वशरीरेषु एक एव जीवोऽभ्युपगम्येत तदावश्यं तल्लोपः प्रसज्येत । किं कारणम् । यत्कारणं सर्वशरीरेष्वेकस्मिञ्जीवे सति सा नोपपद्यते । तदा हि वावैकस्मिञ्जायमाने सर्वे

जायेरन् म्रियमाणे वा सर्वे म्रियेरन् स्वपति वा सर्वे स्वप्युः। जाग्रति वा सर्वे जागृयुः। नचैकस्मिञ्जायमाने सर्वे जायन्ते म्रियमाणे वा सर्वे म्रियन्ते जाग्रति वा सर्वे जाग्रति स्वपति वा सर्वे स्वपन्ति। किमुत। यथानियममिति। सोऽयं जन्ममरणादीनां प्रतिजीवं नियमो व्यवस्था। सा चैकस्मिन् जीवे निर्णीयमाने कथं न लुप्येत। तस्या लोपो यथा मा प्रासञ्जि तथा भवद्भिरपि जीवनानात्वमेव निर्णेतव्यं नच जीवैकत्वमिति। दर्शनकृद्भिरपि जीवनानात्वस्यैव निर्णीतत्वात्। अस्ति च दर्शनकृतां निर्णयसूत्रम्।

**वै. अ. ३ आ. २ सू. २०**

**"व्यवस्थातो नाना" २०**

**सां. अ. १ सू. १४८**

**"जन्मादिव्यवस्थातो पुरुषबहुत्वम्"** इति।

तथाच सर्वशरीरेष्वेक एव व्यापको जीव इत्यसम्यङ् निर्णयो न वाव सम्यङ्निर्णय इति।

**अथ** नाना वा स्यादितिचेन्निर्णीयते, तदापि न सम्यङ्निर्णीयते। किं कारणम्। **'सुखदुःखयोः साङ्कर्यप्रसङ्गात्'** भवतो वाव प्रत्यात्मनियते सुखदुःखे। नच ते कथमपि साङ्कर्यमधिगच्छत इत्यस्ति लौकिकं दर्शनं। संप्रति चेन्नाना व्यापकाश्च जीवा निर्णीयेरन् तदाऽवश्यं ते साङ्कर्यमधिगच्छेतामिति। कथम्। इत्थम्। नाना खलु जीवात्मानः। ते च सर्वे व्यापकाः। व्यापकानां च तेषां प्रधानसंयोगनिबन्धनो वा मनःसंयोगनिबन्धनो वा सुखदुःखयोगो नान्यन्निबन्धन इति भवति व्यापकिनां स्थितिः। तत्र च प्रधानं वा मनो वा सर्वान्प्रत्यवशिष्टत्वाद्वा नियतत्वाद्वा सर्वेषु शरीरेषु समानत्वेन वर्तमानानां जीवानां यदा वावैकेन जीवेन संयुज्येत तदा सन्निधानाद्यविशेषाज्जीवान्तरैरपि संयुज्येतैव न किल न संयुज्येतेति। किंतर्हि। हेत्वविशेषात्फलाविशेषः इति न्यायेनैकस्य जीवस्य तन्निबन्धने सुखदुःखयोगे सर्वेषां जीवानां तत्समान एव सुखदुःखयोगः प्रसज्येत न वाव न प्रसज्येतेति। कस्मात्। नानाजीवेषु गगनादिवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण सन्निहितेषु समानहेतुकयोः सुखदुःखयोः साधारण्येनोत्पद्यमानयोर्व्यवस्थापकमन्तरेण किमेते देवदत्तस्य वा यज्ञदत्तस्य वेति निर्धारयितुमशक्यत्वात्। नहि तत्र कश्चि-

द्व्यवस्थापको विद्यते। येनास्यैवैते सुखदुःखे न किलास्येति व्यवस्था युज्येत। व्यवस्थापकाभावे च जायमाने सुखदुःखे सर्वसाधारणे ते न खल्वसाधारणे इति सांकर्यप्रसङ्ग इति। नच शरीरं वाव तत्र व्यवस्थापकं भवितुमर्हति। सर्वान्प्रत्यविशेषेण स्वतो व्यवस्थाशून्यस्य तस्य सुखदुःखव्यवस्थापकत्वाभावात्। नाप्यदृष्टकृतो नियम उपपद्यते "यज्जीवादृष्टकृतो यो यः संयोगः स तज्जीवस्यैव सुखदुःखयोर्हेतुर्नान्यस्येति। तस्यापि सर्वात्मसन्निधौ क्रियमाणस्य नियमहेतुत्वानुपपत्तेः। नहि तत्रैतददृष्टमेतस्यैव जीवस्य नान्यस्येति नियन्तुं शक्यते येन तत्कृतनियमोऽपि कथंचित्संभवेदिति। यत्र वाव न कश्चिन्नियन्तोपलभ्यते सुखदुःखयोगश्च सर्वसाधारणः, तत्र कथं न सुखदुःखयोः साङ्कर्यं प्रसज्येत, कथं वा तन्नियम उपपद्येत। तस्मान्नायं सम्यङ् निर्णयो यन्नाना व्यापकाश्च जीवात्मान इति।

**व्यवस्थातस्तु नानात्वं जीवानामवगम्यते।**
**व्यापकत्वे कथं वार्यं साङ्कर्यं सुखदुःखयोः ॥ १ ॥**

**कस्तर्हि** सम्यङ् निर्णयः। इति चेदणवो जीवात्मान इति सम्यङ् निर्णयः। कस्मादेष सम्यङ् निर्णयः। **दोषाभावात्**। यथाहि वाव जीवानां व्यापकत्वपक्षे निष्फलत्वादयो दोषाः प्रसरन्ति। नच तथा जीवाणुपक्षे मात्रयाऽपि ते दोषा अवतरन्ति। नहि यावानयं जीवस्तावान्न कार्यस्य साधकः। किमुत। मणिरिवोत्तरतो दक्षिणतः पुरस्तात्पश्चादधस्तादुपरिष्टात्सर्वतः कार्यस्य साधक इति। व्यापके हि जीवे कश्चिद्भागो निरर्थकः कश्चित्सार्थक इति वक्तुं शक्यते। तस्य शरीराद्बहिरबहिर्भागयोस्तत्त्वातत्त्वाभ्यां वर्तमानत्वात्। यस्तु खलु हृदयस्यान्तर्ज्योतिरिवाधूमकोऽणुर्जीवो न तत्रेदृशी व्यवस्था संभवति निरर्थकोऽपि स्यात्सार्थकोऽपि स्यादिति। किमधिकेन। यदा वाव सम्राडिव जीवोऽयं बुद्धिसौधस्थोऽपि नित्यमवक्रतेजसा शरीरेन्द्रियादिवर्गान् यथानियमं चालयन्न क्षणमेकं निरर्थकायते तदा सर्वथा सर्वोऽयं सार्थक इति किमु वक्तव्यम्। अपि च वक्तव्यम्। अणुवादिनामस्माकं व्यापकिनामिव निरर्थकस्य तस्याङ्गीकारे प्रयोजनाभावात्।

**नापि** लोकादिगमनागमनयोरसंभवो वाव शक्यसंभवः। परिच्छिन्नस्य तस्य चलनाश्रयत्वेन गमनागमनयोस्तत्र सुतरामुपपन्नत्वात्। स्पष्टं चैतदिति नाधिकमस्माभिर्वितन्यते।

**नापि** सुखदुःखसाङ्कर्यप्रसङ्गाभिधो दोष आवहति । कस्मात् । जीवानामणुत्वेन परस्परवार्तानभिज्ञतया प्रतिशरीरमवस्थितानां स्वस्वकर्मोपार्जितसुखदुःखोपभोक्तृत्वस्य स्वत एव व्यवस्थितत्वात् । यत्र वाव स्वत एव व्यवस्थिता जीवाः स्वत एव च सुखदुःखव्यवस्थितिः तत्र कथं सुखं वा दुःखं वा सङ्कीर्येत । कथं वा तत्सङ्कर आशङ्क्येत । नह्यव्यतिकीर्णेषु धर्मिषु तद्धर्मा व्यतिकीर्यन्ते । किमुत । व्यतिकीर्णेषु धर्मिष्विति । नचाणवो जीवात्मानो व्यापका इव कथमपि व्यतिकीर्यन्ते येन तद्धर्मा अपि व्यतिकीर्येरन् । चेद्व्यतिकीर्णधर्मा अपि कश्चिद्व्यतिकीर्णा इति मन्येत तदाऽसंबद्धं भाषमाणोऽसौ बुद्धिसागरः कथं नापत्रपेत कथं वा स्वपाण्डित्यवैभवं न प्रकाशयेत । नह्यसंबद्धं भाषमाणा अपि विशालबुद्धयो नापत्रपन्ते पण्डितंमन्या वा सन्तो न प्रकाशन्ते । यदा वावेद्दग्वृत्तं तदा जीवाणुपक्षे कथं सुखदुःखयोः साङ्कर्यं प्रसज्येत कथं वा जीवाणुपक्षे कश्चिद्दोषोऽवतरेदिति ।

**तत्र** हि वाव दोषा वा दोषाभासा वा कथंचिदवतरन्ति यत्र वेदो वा शास्त्रं वाऽनुमानं वा प्रमाकरणानि न भवेयुः । यत्र तु वेदो वा शास्त्रं वाऽनुमानं वा भूरिशः प्रमाकरणानि विद्यंते । तत्र दोषा वा दोषाभासा वा कथमवतरेयुः । अवतरन्तो वाऽकिंचित्करास्ते किं कुर्युः । सन्ति चात्र नानाजीवाणुपक्षे वेदश्च शास्त्रं चाऽनुमानं च भूरिशः प्रमाणानि तद्यथा वेद.

**कृ. यजुर्वे. श्वे. अ. ४ मं. ५**
**"अजामेकां लोहितशुक्लकृष्णां**
**बह्वीः प्रजाः सृजमानां सरूपाः ।**
**अजो ह्येको जुषमाणोऽनुशेते**
**जहात्येनां भुक्तभोगामजोऽन्यः"**
**अथर्व. ९-१६-१० अ. ब. मं.**
**"द्वासुपर्णा सयुजा सखाया**
**समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्य-**
**नश्नन्नन्योऽभिचाकशीति ॥ १० ॥**

यजुर्वेदीयकठोपनि० व. ५ मं.

"नित्योऽनित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम्" ॥ १३ ॥

अथर्ववेदीयमुण्डकोपनि. मुं. ३ खं. १

"एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन्प्राणः पञ्चधा संविवेश" ॥ ९ ॥

कृष्णयजुर्वे. श्वेताश्वतर. अ. ५

"बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" ॥ ९ ॥

तद्यथा शास्त्रम्.

वेदा. अ. २ पा. ३ सू. १९

"उत्क्रान्तिगत्यागतीनाम्" ॥ १८ ॥

समाधिपादस्थ "विशोकावाज्योतिष्मतीति षट्त्रिंशसूत्रे वैयासके योगभाष्ये भाष्यकृद्धृतपञ्चशिखाचार्याणां सूत्रम् ।

"तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत्संप्रजानीते" ॥ १ ॥

अनुमानं च "यो यो ज्ञानासमवायिकारणसंयोगाश्रयः, स च मनोवदणुरिति प्रतिबन्धः, ज्ञानासमवायिकारणसंयोगाश्रयश्च जीवः, तस्मात्सोऽप्यणुरिति १ यद्वा या या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः, सा सा सर्वा पृथिवीत्वादिवदणुनिष्ठेति, आत्मत्वमपि द्रव्यत्वस्य साक्षाद्व्याप्या जातिरेव तस्मात्तदपि जीवात्मनिष्ठमिति २ यद्वा यो यो भूतेतरत्वे सति परत्वासमवायिकारणानाधारःसन्नसर्वज्ञो वा, शब्देतरानित्यविशेषगुणाश्रयो वा, संस्काराश्रयो वा, जायते । स च सर्वो वाव घटादिवदव्यापक इति । जीवोऽपि किल भूतेतरत्वे सति परत्वासमवायिकारणानाधारः सन्नसर्वज्ञः

शब्देतरानित्यविशेषगुणाश्रयः संस्काराश्रयश्च । तस्मात्सोऽप्यव्यापको भवितुमर्हति न स्याद्व्यापक इति । ३ ।

**यदा** वावेत्थं जीवाणुपक्षे वेदशास्त्रानुमानानि प्रमाकरणानि सन्त्येव । तदा क्वा दोषाः क्वा दोषाभासाः संभवेयुः । तदसंभवे वा कथं न जीवाणुपक्षो निर्दुष्येत । निर्दुष्टे वाव जीवाणुपक्षे कथं वा व्यापको जीवः सिध्येत् । तदसिद्धे वा कथं व्यापकत्वं हेतुस्तत्र साध्यं व्यभिचरेत् । अव्यभिचरन् साध्यं वा कथं मूर्तिमत्त्वाभावस्य साधनाय साधकतमो न भवेत् । यत्कारणं स्वतएव विपक्षतो व्यावृत्त इति । तस्मादीश्वरो न मूर्तिमान् व्यापकत्वात् कालादिवदिति साधु निष्पन्नम् ।

**अत्रोच्यते** । न वाव सम्यङ्निर्णेतारो भवन्तः नापि सम्यङ्निर्णयो भवताम् । यत्कारणमबुद्धतत्वा इव बालबुद्धयोऽतिरभसा जीवाणवं प्रतिजानते 'जीवोऽयमणु'रिति । न जाने केन दूरदृष्टेनेत्थं जीवाणवप्रतिज्ञायै त्वार्यन्ते श्रीमन्तः । किं न प्रतिबुध्यध्वे । चेज्जीवोऽयमणुः स्यात् तदा कथं प्रत्यक्षगुणकः स्यात् । नहि प्रत्यक्षगुणकोऽणुर्भवति । अणुर्वा प्रत्यक्षगुणक इति । प्रत्यक्षगुणकानां घटपटाद्यर्थानामनणुत्वदर्शनात् । नच जीवस्य ज्ञानादयो गुणाः स्वात्मन्यप्रत्यक्षा इति वक्तुं शक्यन्ते । चेदप्रत्यक्षास्ते प्रादुःष्युः । तदा परोक्षे विषय इव ज्ञानादावपि पुरुषस्य संशयो वा विपर्ययो वा व्यतिरेकप्रमा वोत्पद्येत । नचोत्पद्यते । तत्कस्य हेतोः । यस्य हेतोरात्मगुणा ज्ञानादयः स्वात्मना प्रत्यक्षा इति । यदा वाव प्रत्यक्षा इति । तदा तद्गुणको जीवोऽणुरिति भवतां भणितयः कथमुपपद्येरन् कथं वा परीक्षकैरुपादीयेरन् । न चाणूनां गुणाः कथंचित्प्रत्यक्षा भवितुमर्हन्ति । यदि प्रत्यक्षा भवितुमर्हेयुः तदा तद्गुणकाः कथमणवो भवेयुः । अणवो ह्यप्रत्यक्षगुणका इति । प्रत्यक्षगुणकश्च जीवात्मा । सच कथमणुः स्यात् कथं वा परिशेषाद्विभुर्न स्यादिति ।

**नच** केवलं प्रत्यक्षगुणाश्रयत्वादेवानणुरयं जीवात्मा । किमुत । सर्वाङ्गीणशैत्यवेदनोपलब्ध्यन्यथानुपपत्तेरपि । कथम् । इत्थम् । चेज्जीवोऽयमणुः स्यात्तदा जाह्नवीह्रदनिमग्नस्य सर्वाङ्गीणशैत्योपलब्धिर्वा सर्वाङ्गेषु कण्टकादितुन्नस्य सर्वाङ्गीणवेदनोपलब्धिर्वा न स्यात् । नह्यणोर्जीवस्य सर्वाङ्गीणशैत्योपलब्धिर्वा वेदनोपलब्धिर्वा कथंचिदुपपद्यते । कथमुपपद्येत । जी-

वो हि वावाणुपरिमाणः। सच शरीरस्य यं प्रदेशमधिकुर्यात् तत्रैव शैत्यं वा वेदनां वा विजानीयात् नान्यत्र। किंकारणम्। अणुसंबन्धस्याणुप्रदेशत्वौचित्यात्। नचाणुसंबन्धोऽणुप्रदेशं विहायान्यत्रास्ते। येन प्रदेशस्थोऽपि प्रदेशान्तरभवं शैत्यं वा वेदनां वा कथंचिदुपविन्देदिति। **नच** वाच्यमणुरपि जीवस्त्वक्संबन्धाच्छैत्यं वा वेदनां वा साक्षात्करिष्यति त्वक्च सर्वशरीरव्यापिनीति न कश्चिद्दोष इति। **मनोरथमात्रत्वात्।** मनोरथमात्रं खल्वेतद्भवतां "यन्न कश्चिद्दोष" इति। मन्येऽहमणुर्जीवस्तत्संबन्धश्च त्वचि त्वक्च सर्वशरीरव्यापिनीति, तथापि त्वचि वर्तमानो जीवाणुसंबन्धश्चेत्त्वङ्मात्रं व्याप्नुयात् तदा स्यात्कथंचिद्भवतां मनोरथः। परं न स कर्हिचित्त्वङ्मात्रं व्याप्तुमर्हति। किं कारणम्। यत्कारणं महदल्पयोः संबन्धो ह्यल्पमवरुणद्धि नच महान्तमिति। न जातु नभसि वर्तमाना घटकरकादिसंयोगाः नभोमात्रं क्वचिद्व्यश्नुवते। किमुत। घटकरकादीनेवाल्पान्। चेत्ते नभोमात्रं ह व्यश्नुवीरन्। तदा यत्र यत्र नभस्तत्र तत्र सर्वत्र घटकरकादयस्तावदुपलभ्येरम्। उपलभ्यमाना वा नभःपरिमाणास्ते प्रसज्येरन्। न चोपलभ्यन्ते नवा तथा प्रसज्यन्ते। तस्मान्महदल्पयोः संबन्धोऽल्पमवरुणद्धि नच महान्तमिति मन्तव्यम्। तत्राल्पश्च जीवस्त्वक् च तदपेक्षया महती तयोश्च संबन्धश्चेत्कथं स महतीं त्वचं व्यश्नुवीत कथं वा तत्संबन्धादणुर्जीवः शैत्यं वा वेदनां वा साक्षात्कुर्वीत। यत्कारणं त्वचि वर्तमानोऽपि तत्संबन्धोऽणुदेश एव वर्तते नाखिलायां त्वचीति। चेत्त्वङ्मात्रसंबन्धादेव सर्वाङ्गीणशैत्यवेदनयोरुपलब्धिर्मन्येत तदोरःपादतलयोर्वाव हिमकण्टकक्लेदनतोदनयोरपि सकलशरीरगे एव शैत्यवेदने प्रसज्येयाताम्। किं कारणम्। यत्कारणं त्वग्घिमकण्टकानां संबन्धो जीवाणुसंबन्ध इव कृत्स्नायां त्वचि वर्तते त्वक्च सर्वशरीरव्यापिनीति। परमुरस्येव तु तुहिनक्लिन्नः शैत्यं पादतल एव तु कण्टकतुन्नो वेदनां प्रतिलभते नच सर्वशरीर इति। तत्कथं भवदुक्तिः प्रमाणं स्यात् कथं वा जाह्नवीह्रदनिमग्नो वा सर्वाङ्गेषु कण्टकादितुन्नो वाऽणुप्रदेश एव शैत्यवेदने न प्रतीयात्।

**एत**दपि भवदादरार्थमुच्यते। यस्माद्यूयमप्यास्माकीना इति। वस्तुगत्या तु न किमपि प्रतीयादिति। कथम्। इत्थम्। जीवेनाणुना संबद्धस्त्वक्प्रदे-

शोऽपि तावदणुरेव वक्तव्यो नानणुरिति । तस्मिन्वाव वक्तव्ये यत्र त्वक्प्रदेशे जीवाणुसंबन्धो वर्तते नच तत्रावश्यायसंबन्धो वा कण्टकसंबन्धो वा भवितुमर्हति । कस्मात् । एकत्रानेकमूर्तद्रव्यसंयोगासंभवात् । नहि यत्रैकं द्रव्यं संयुज्यते तत्रान्यदपि संयुज्येतेति संभवति । यं चाणुं त्वक्प्रदेशं किल जीवोऽणुः पुरस्तादेव समबध्नत् । कथं पुनरेतमेवाणुप्रदेशं हिमकण्टकौ वाव संबध्नीयाताम् । किं तर्हि । न कथमपि संबध्नीयातामिति । कस्मात् । संभवाभावात् । तथाच तत्र हिमकण्टकयोरसंबन्धे तन्निमित्तके शैत्यवेदने कथं जीवोऽयं विजानीयादिति भवद्भिरेव समाधेयं किमस्माकं भूरिभाषितेन ।

**भवतु** वैकत्राणुप्रदेशे बहूनामणूनां संसर्गः भवतां वा तत्र तन्निमित्ते शैत्यवेदने । तथापि तत्प्रत्यक्षं कुतो जायेत । नह्यणौ जायमाना धर्माः कथमप्यक्षैः ग्रहीतुं शक्यन्ते । तस्मान्नैतत्समंजसं यत्त्वक्संबन्धात्सर्वाङ्गीणे शैत्यवेदने जीवोऽणुः साक्षात्करिष्यतीति ।

**ननु** सकलदेहव्यापिशैत्यवेदनयोस्त्वक्संबन्धादणोर्जीवस्य साक्षात्कारो माभूत् चैतन्यगुणव्याप्तेस्तु तस्य साक्षात्कारो भविष्यत्येव । यत्कारणमणोरपि जीवस्य मणिदीपप्रभृतीनां सौधव्यापिरुचिरिव देहव्यापि चैतन्यं गुणो वावाभ्युपेयते । तथाच का नामानुपपत्तिरस्माकं जीवाणुवादिनामिति ।

**मैवं वक्तव्यं** । गुणगुणिभावानुपपत्तेः । भवति तावद्वैधर्म्ये गुणगुणिभाव उपपद्यते । यत्र वाव किंचिद्वैधर्म्यं नास्ति किमुत साधर्म्यं वर्तते । न तत्र गुणगुणिभाव इति । रूपरसादयो हि गुणाः पृथिव्यादयश्च गुणिनस्तेषां किल वैधर्म्ये भवत्येव गुणगुणिभावो दृष्टोऽस्ति नावैधर्म्ये इति। चेद्वैधर्म्येऽपि गुणगुणिभावमुत्प्रेक्षेत तदा स्वानुभवमार्गमवगूर्य गुणगुणिभावं कल्पयमानो विजिगीषुरसौ कथं न सहसा पराजीयेत कथं वा रूपरसादीनां घटपटादीनां च गुणगुणिभावं नावकल्पयेत् । नच रूपं वा रूपान्तरस्य रसो वा रसान्तरस्य घटो वा घटान्तरस्य पटो वा पटान्तरस्य गुणो वा गुणि वा विद्यते संभवति वा । यदा वाव न संभवति तदा जीवाणुचैतन्ययोरपि गुणगुणिभावः कथं संभवेत् कथं वा चैतन्यस्य चैतन्यं गुण इत्युपपद्येत । जीवोऽपि चैतन्यं तद्गुणोऽपि चैतन्यमिति च भवति भवतां

पद्धतिः । सा केवलमज्ञानविजृंभितेति किं कुर्महे । किं न जानीध्वे । यदा स्वतश्चैतन्यात्मको जीवस्तदा चैतन्यान्तरस्य किं प्रयोजनमिति । चैतन्यं ह्यस्य स्वरूपमग्नेरिवौष्ण्यप्रकाशौ स्वरूपंच न कुत्रचिद्गुण उपपद्यते । तस्मादनुपपन्नो गुणगुणिभाव इति ।

**नापि** गुणव्याप्तिरुपपद्यते । कस्मात् । गुणानां गुणिदेशत्वनियमात् । गुणानां ह्येष स्वभावः यत्ते गुणिदेशं नातिवर्तन्त इति । चेद्गुणिदेशमतिवर्तेरन् तदा नच ते गुणा व्यपदिश्येरन् । स्वतन्त्रत्वात् । नहि गुणाश्च स्वतन्त्राश्चेति कथंचिद्युज्यते । यत्कारणं गुणिनिघ्नास्ते गुणा भवन्तीति । यदृष्टं तदेव वाव कल्पयितव्यं भवति नचादृष्टमिति नियमः । गुणिव्यतिरेकेण च गुणानामवस्थानमदृष्टम् । तत्कथं चैतन्यं गुणो गुणिव्यतिरेकेण व्याप्नुवद्देहं कल्प्येत कथं वा गुणिनमनाश्रित्य वर्तमानस्य तस्य गुणत्वमेव न हीयेत ।

**ननु** न गुणत्वं हीयते प्रभावदुक्तत्वात् । दृष्टा हि प्रभा मणिदीपातिरेकेण वर्तमाना सौधमात्रस्य दीपिका इति । **न** । कस्मात् । गुणत्वासंप्रतिपत्तेः । नैतत्साधूदाह्रियते यत्प्रभावदिति । नहि प्रभा गुणत्वेन कश्चित्संप्रतिपद्यते येनोदाह्रियेतापि । निबिडावयवं हि तेजो द्रव्यं मणिप्रदीपौ विरलावयवं तु तेजोद्रव्यं प्रभेति । सेयं द्रव्यत्वान्मणिदीपातिरेकेण वर्तमाना सती सौधमात्रं व्याप्नुयादपि नाश्चर्यमिति । चैतन्यं पुनर्गुणत्वाज्जीवाणुव्यतिरेकेण वर्तमानं देहमात्रं व्याप्नुयादिति महदाश्चर्यं । गुणानां व्याप्तेरेवानुपपत्तेः ।

**भवतु** वा प्रभावदित्युदाहरणम् । तथापि व्याप्तेरनुपपत्तिस्तदवस्थैव । मध्यमपरिमाणो हि मणिर्वा प्रदीपो वा तत्प्रभापि मध्यमपरिमाणा सती कथंचित् सौधमात्रं व्याप्तुं शक्नुयादपि । पारिमाण्डल्यपरिमाणस्तु जीवः तत्प्रभापि सती कियती स्यात् । कथं वा मध्यमपरिमाणकं देहं व्याप्नुयादिति न सुज्ञानां बुद्धिमारोहति । चेद्भवद्बुद्धिमारोहेत् तदा लोकोत्तरप्रज्ञानां भवतां किं दीपप्रयत्नेन । कश्चित्तेजःपरमाणुरेव स्वप्रभया सदनानि वो नित्यशः प्रदीपयिष्यतीति । प्रदीपैरेव तु प्रदेदीप्यमानानि भवत्सदनानि दृश्यन्ते । तत्कथं बुद्धिमारोहेत् "अणोर्जीवस्य चैतन्यं गुणो मध्यमपरिमाणकं देहं व्याप्नुयादिति । यदा वाव नैतद्बुद्धिमारोहति तदाऽनुपपन्ना व्याप्तिरिति

किमु वक्तव्यम् । अपिच वक्तव्यं । तस्मिन्खलु वक्तव्ये कथमणुपरि-माणको जीवः पुनः सर्वाङ्गीणे शैत्यवेदने प्रत्यक्षीकुर्यादित्यणुवादिभिरेवोपपादनीयम् । नच विभुवादिभिः । तेषां सर्वव्यवस्थाया उपपन्नत्वात् । तथाच सर्वाङ्गीणशैत्यवेदनयोरुपलब्ध्यन्यथानुपपत्तेरपि व्यापकोऽयं जीवात्मा न स्यादणुपरिमाण इति स्वत एव निष्पन्नं किमिह बहूपदेशेनेति ।

**किं** च वो जीवाणवे प्रमाणम् । यत्कृत्वा दोषा वा दोषाभासा वा त्वत्पक्षे नावतरेयुरिति । ननूक्तं वेदशास्त्रानुमानानि प्रमाणमिति । सत्यमुक्तं वेदशास्त्रानुमानानि प्रमाणमिति । तथापि तानि नच जीवाणवस्य साधकानीति निश्चिनुमः । किं कारणम् । वेदादिवचनानां तत्परत्वाभावात् । अनुमानानां च दुष्टत्वात् । तथाहि । यत्परं वचनं स वचनार्थः । यश्च वचनार्थः तत्र तद्वचनं प्रमाणं नान्यत्रेत्येषा सरणिः । यदा वावैषा सरणिस्तदा **"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पंचधा संविवेश"** इत्यौपनिषत्कं वचनमपि नच जीवाणवे प्रमाणमिति वेदितव्यम् । किं कारणम् । यत्कारणमतत्परमिति । यद्यत्परं न भवति, तत्तत्र प्रमाणमिति किमु वक्तव्यम् । नैतद्वक्तव्यम् । नहि "गरलं भुंक्ष्व" इति वचनं गरलाशने प्रमाणमिति प्रमाणविदश्चक्षते । किमुत । द्विड्सदनाशनाभाव इति । कस्मात् । यस्मात्तत्परमेतद्वचनमिति । किं परं तर्ह्यौपनिषत्कं वचनं, यत्र तत्प्रमाणं स्यात् । ईश्वरवेदनपरमिति व्याहरामः । कस्मात् । प्रकरणात् । यद्यत्र प्रक्रियते, तत्तत्र व्याक्रियते । यस्य यत्र प्रकरणं नास्ति, किं तत्तत्र व्याक्रियेत् । नचात्र प्राधान्येन जीवस्य प्रकरणमस्ति, येन तत्परिमाणं वा वेदनं वौपनिषत्कं वचनमभिदध्यात् । ईश्वरस्य प्रकरणं तु विशदमुपलभ्यते । **"बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति, दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्"** इति तद्रूपमुपवर्ण्य **"एषोऽणुरात्मा चेतसा वेदितव्यः"** इति वेदनाभिधानात् । यस्य रूपमुपवर्ण्य **"एष वेदितव्यः"** इत्यभिधीयते । तस्यैवैतत्प्रकरणं नान्यस्येति । नहि **बृहच्चेति** वर्णितं रूपं जीवस्य जीवाणुवादिनो मन्यन्ते, येनेह

जीवः प्रक्रियेत। **एष** इति सर्वनाम्ना वा परामृश्येत। परामृश्य वौपनिषत्कं वचनं **वेदितव्य** इति व्याहरेत्। किमुत। ईश्वरस्येति। बृहच्चेति वर्णितं रूपमीश्वरस्यैव संभवति। तस्मादीश्वरस्यैवैतत्प्रकरणं न जीवस्येति। यदा वाव प्राधान्येनेश्वरस्यैवैतत्प्रकरणं, तदा तस्यैव **'एष'** इति सर्वनाम्ना परामर्शः, तस्यैव च **'वेदितव्य'** इति वेदनोपदेश इति।

**किंच** प्रधानं हि सर्वनाम्ना परामृश्यते, नाप्रधानम्। प्रधानं चात्रेश्वरो जीवश्चाप्रधानमिति। कस्मात्। कर्मकर्तृव्यपदेशात्। भवति चेह कर्मकर्तृव्यपदेशो **"ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"** इति। तत्र यस्य साक्षात्काराज्ज्ञानादपवर्गो यश्च "बृहच्चेति वर्णितरूपस्तं (निष्कलं) निरवयवं परमात्मानमिति कर्मव्यपदेशः। (ध्यायमानः) एकाग्रेण चेतसा चिन्तयमानो (विशुद्धसत्वो) जीव इति कर्तृव्यपदेशः। (पश्यते) पश्यति साक्षात्करोतीति क्रियार्थः। किंतर्हि। प्रधानाश्रयत्वात्प्रधानं कर्म। कर्म चेश्वरः। तस्मात्प्रधानमीश्वर इति। यदा वाव प्रधानमीश्वरः तदा तस्यैव "एष इति सर्वनाम्ना परामर्श" इति किमु वक्तव्यम्। अपिच वक्तव्यम्। तस्मिन्वाव वक्तव्ये (एषः) परमात्मा यस्माद् (अणुः) सूक्ष्मादपि प्रकृत्यादेः सूक्ष्मस्तस्माद् (चेतसा) ध्यानादिना सूक्ष्मया बुद्ध्या (वेदितव्यः) साक्षात्कर्तव्यः इति वचनार्थो निष्पद्यते। निष्पन्ने खलु वचनार्थे कथं तद्वचनं जीवाणवे प्रमाणं स्यात्, कथं चेश्वरस्य वेदनपरं वा न स्यादित्यणुवादिभिरेव समाधातव्यम्। किमस्माकं भूयः कण्डूयनेनेति।

**भवतु** वा जीवपरमेतद्वचनं तथापि न तज्जीवस्याणवं प्राह। किंमुत। सौक्ष्म्यमिति। किंकारणम्। **"विभवत्येष आत्मा"** इति वाक्यशेषे तद्विभुभावस्यैवावगमात्। यत्र वाव यस्य विभुभावोऽवगम्यते, नच तत्राणवं तस्यावगन्तुं शक्यते। नह्येकः पदार्थो विभुरपि स्यादणुरपि स्यादिति युज्यते। युज्यते तु विभुरपि स्यात्सूक्ष्मोऽपि स्यादिति। कस्मात्। सौक्ष्म्यविभुभावयोरेकत्र स्थितौ विरोधाभावात्। यथाहि वावाणुपरिमाणं महत्परिमाणं चैकत्र स्थितौ मिथो विरुन्धाते नच तथेमौ सौक्ष्म्यविभुभावाविति गगनादिषु व्यापकेषु सत्स्वपि सौक्ष्म्यस्याविप्रतिपत्तेः। तथाच **"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पंचधा संविवेश"**

इत्यौपनिषत्कं वचनं तावत् नच जीवाणवे प्रमाणं स्यात् । किमुत । अप्रमाणमिति । तस्य तत्परत्वाभावात् ॥

**एतेन** पंचशिखाचार्याणां सूत्रमपि जीवाणवे प्रमाणमिति निरस्तं वेदितव्यम् । तत्रत्याणुशब्दस्यापि सूक्ष्मार्थकत्वेन जीवाणवपरत्वाभावात् । यथाहि **"अणुपन्था विततः पुराणः"** इति वचनान्तरे **"अणुश्च"** इति द्वितीयाध्यायचतुर्थपादस्थे त्रयोदशे शारीरकसूत्रे च पथिप्राणयोः प्रयुक्तोऽप्यणुशब्दो न तयोराणवं प्राह । किमुत । सौक्ष्म्यमिति । तथात्रापि बोद्धव्यम् ।

**एवं "बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः"** इति श्वेताश्वतरीयवचनमपि न जीवस्याणवे पर्यवस्यति, येन तत्र प्रमाणं स्यात्। किमुत । जीवानन्त्य इति । कस्मात् **"स चानन्त्याय कल्पते"** इति वाक्यशेषे तदानन्त्यस्यावगमात् । चेज्जीवोऽयं बालाग्रायुतपरिमाणको विद्येत । कथं पुनरानन्त्याय कल्पेत । व्यपदिश्यते तु श्रुतिवचसा **"स चानन्त्याय कल्पते"** इति । नह्येकस्योभयं कल्पयितुं शक्यते । बालाग्रायुतपरिमाणकोऽपि स्यादनन्तोऽपि स्यादिति । तस्मादेकं तत्र पारमार्थिकमपरं चौपाधिकमिति वक्तव्यम् । किं तत्र पारमार्थिकं किञ्चौपाधिकमिति । जीवानन्त्यं पारमार्थिकं बालाग्रायुतपरिमाणकत्वं चौपाधिकमिति । कस्मात् । आनन्त्यस्यौपाधिकत्वासंभवात् । नहि लोके कचिदुपाधिसंबन्धादुपहितमनन्तमुपलभ्यते । प्रत्युत, यत्र यत्रोपलभ्यते, तत्रतत्रोपाधेः पुरस्तादनन्तमपि तत्संबन्धादन्तवदिवोपलभ्यते, न वावानन्तमिति । कथमनन्तमुपलभ्येत । उपाधिर्हि यद्यदुपदधाति, तत्तत्परिच्छिनत्तीव, न किलानन्तीकरोतीति । दृष्टं वावानन्तमप्याकाशमुपाधिसंबन्धात् सान्तमिव । तद्यथा "मठाकाशं घटाकाशं श्रोत्राकाशमिति ।

तदाचैषोऽनन्तीकुर्यात् यदि स्वयमनन्तः स्यात् । नचोपहितापेक्षयोपाधिरनन्तः संभवति, कचित्संभाव्यते वा । चेत्संभाव्येत, तदानन्तः स किमनन्तं कुर्यादित्याचष्टाम् । किमनन्तं वा परिच्छिन्नं, वा । न तावदनन्तं, तस्य प्रागेवानन्तत्वात् । न वा परिच्छिन्नं, तस्यानन्त्यासंभवात्, व्याघाताच्च । न वाऽनन्तः कश्चिज्जीवोपाधिरभ्युपगम्यते, येन जीवानन्त्यमौपाधिकं संभवेत्,

पारमार्थिकं वा न भवेत्। यदा वाव सर्वथाऽसंभवएव, तदा जीवानन्त्यं पारमार्थिकं बालाग्रायुतपरिमाणकत्वं चौपाधिकमिति सहर्षमङ्गीकर्तव्यम् । न स्यादाग्रहीतव्यम् । अन्यथा कचिद्वालाग्रायुतपरिमाणकत्वं १ कचिदङ्गुष्ठमात्रत्वं २ कचिदाराग्रमात्रपरिमाणत्वं ३ कचिदानखाग्रपरिमाणकत्वं ४ कचिदानन्त्यपरिमाणत्वं ५ चात्मनः श्रुतिवचोभिः प्रतिपाद्यमानं न संगच्छेत। नवा विसंवादिनां तेषां प्रामाण्यं प्रसज्येत। तच्च मामकानां तावकानां चामङ्गलमेव । न वाव मङ्गलमिति । तस्मादानन्त्यं पारमार्थिकं, सर्वं चान्यदौपाधिकमिति साधुः सिद्धान्तः । सर्वव्यवस्थोपपत्तेः । परमार्थतोऽनन्तोऽपि जीवात्मा येनयेनोपाधिना संयुज्यते तत्तदुपाधिसंयोगाद्गगनमिव तथा तथा व्यपदिश्यते। व्यपदेशश्च सर्वस्तत्तदुपाधिनिबन्धन एव न जातु परमार्थतः। उपाधिश्चात्र बुद्धिर्वा तद्गुणो वेत्युपपन्ना व्यवस्था। दर्शयति चात एवौपनिषत्कं वचनम्। **श्वेताश्व० अ ५. मं ८**

**"बुद्धेर्गुणेनात्मगुणेन चैवाराग्रमात्रोऽप्यवरोपि दृष्टः"**

इति। तत्रात्मगुणेन महत्त्वादिनाऽवरोऽपि महानपि जीवात्मा बुद्धेर्गुणेन अणुत्वादिनाऽऽराग्रमात्रोऽपि दृष्ट इति वचनसमन्वयः। तथा बृहदारण्यकेऽपि याज्ञवल्क्यसंवादे। तद्यथा **अध्या० ६ ब्राह्म० ३**

**"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव"** इति।

"स समानः सन्निति बुद्धिसमानरूपतां" ध्यायतीव लेलायतीवेति तद्गुणसमानरूपतां च दर्शयतीति बोद्धव्यम्। यथा चैतत्तथोक्तं योगदर्शनेऽपि। तद्यथा० **योग० पा० २ सू० २०**

**"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्य"** इति।

प्रतीयतेऽनेनेति प्रत्ययो बुद्धिर्वा बौद्धप्रत्ययो वा तमनुपश्यति तमनुपश्यन्नतदात्मापि तदात्मक इव प्रत्यवभासते इति तत्सूत्रावयवार्थः। समाहितं चैवमेवैतत् तत्रभवद्भिर्बादरायणाचार्यैरप्युत्तरमीमांसायाम् । तद्यथा तेषांसमाधिसूत्रं **अ० २ पा० ३ सू० १९**

**"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्"** इति।

चेद्विभुरयं जीवात्मा कथमणुत्वादिकं श्रुत्या व्यपदिश्यते इत्याशंक्य समादधते **तद्गुणसारत्वात्तु तद्व्यपदेश** इति । यथाहि प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः **"अणीयान् व्रीहेर्वा[1] यवाद्वा मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसङ्कल्पः"** इत्येवं-प्रकारः । तद्वज्जीवात्मनोऽपि तद्गुणसारत्वात् तस्याः बुद्धेर्गुणाः अणुत्वादयः सारः प्रधानं यस्य जीवात्मनस्तस्य भावस्तत्वं तस्मात् तद्व्यपदेशः अणुत्वादिव्यपदेशो न स्यात्स्वरूपप्रयुक्त इति सूत्रार्थः । किं तर्हि । यदेत्थमणुत्वादिनिखिलो व्यपदेशस्तत्तदुपाधिनिघ्न एव न जातु स्वरूपनिबन्धन इति तदा **"बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः"** इति श्वेताश्वतरीयवचनं तावज्जीवस्याणवे प्रमाणमिति भवतामाशापि पुनर्दुराशैव । वचनस्य तस्य तत्परत्वाभावेन तत्राप्रमाणत्वात् ।

एतेन **" उत्क्रान्तिगत्यागतीनाम् "** इति सूत्रं जीवस्याणवे प्रमाणमिति पराकृतं वेदितव्यम् । तस्याप्युपाध्युत्क्रान्त्यादिपरत्वेन जीवोत्क्रान्त्यादिपरत्वाभावात् ।

**एवं** "ज्ञानासमवायिकारणसंयोगाश्रयो जीवो मनोवदणुरित्यनुमानमपि नच जीवाणवे प्रमाणं भवितुमर्हति । किंकारणम् । हेतोः सोपाधिकत्वात् । साध्यव्यापकत्वे सति साधनाव्यापकस्तावदुपाधिरभिधीयते । स च यत्र वर्तते स सोपाधिकः यत्र निवर्तते स निरुपाधिक इत्युच्यते । भवति च ज्ञानासमवायिकारणसंयोगाश्रयत्वं हेतुरपि सोपाधिक इति । कस्तत्रोपाधिर्यत्संबन्धादेष सोपाधिक इति । जडत्वमिति । जडत्वं वाव तत्रोपाधिरध्यवसातव्यः । स हि मनः परमाणुषु साध्यस्य व्यापको जीवात्मनि पक्षे च साधनस्याव्यापक इति। किंतर्हि । चेदयं सोपाधिको हेतुर्न वाव निरुपाधिकस्तदा नासौ स्वसाध्यमवगमयेत् । किंकारणम् । तस्य व्यापकव्यभिचारेण स्वसाध्यव्यभिचारस्याप्यावश्यकत्वात् । यस्तावद्धेतुर्व्यापकं व्यभिचरति तस्य तद्व्याप्यव्यभिचारोऽप्यावश्यक इति । नहि व्यापकं व्यभिचरन्नव्यापकं न व्यभिचरतीति नियन्तुं शक्यते, यत्कारणं व्यापकव्यभिचा-

---

१ छां० प० ३, खं० १४.

रस्य नान्तरीयको व्याप्यव्यभिचार इति। साध्यस्य व्यापकः खलूपाधिस्तं चेद्धेतुर्व्यभिचरेत् तदावश्यं तद्व्याप्यं साध्यमपि व्यभिचरेत्। यश्च साध्यमपि व्यभिचरेत् किं स पुनः साध्यं साधयेत्। व्यभिचारिणस्तस्य साध्यसाधकत्वाभावस्य पुरस्तादेवावेदितत्वात्। यथाहि वाव धूमवान्वह्नेरित्यत्रार्द्रेन्धनसंयोगव्यभिचारिणो वह्नेर्न धूमसाधकत्वं तथा जडत्वव्यभिचारिणो ज्ञानासमवायिकारणसंयोगाश्रयत्वस्य हेतोरपि न जीवाणवसाधकत्वमिति निश्चीयते। हेतुदोषस्योभयत्रापि तुल्यत्वात्। उपाधिश्च व्याप्तिप्रतिबन्धेन हेतुदोष इत्यन्यत्र विस्तरः। तथाच सोपाधिकमनुमानमुपन्यस्य वेदशास्त्रविरुद्धं जीवाणवं प्रमाणयतां भवतां कथं मनोरथः सिध्येत्। कथमप्रमाणको वा जीवाणुपक्षो न दुष्येदिति तावकैरेवानुसंधातव्यं किमस्माकमनुसंधानेन।

**एतेना**त्मत्वमणुनिष्ठं द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्वादिवदित्यनुमानान्तरमपि परास्तं वेदितव्यम्। किंकारणम्। अत्रापि हेतोः सोपाधिकत्वेन साध्यसाधकत्वाभावात्। अस्ति तावद्व्यापकावृत्तित्वमत्रोपाधिः। सोऽयं व्यापकवर्तिन्यात्मत्वे साधनाव्यापकः पृथिवीत्वादौ सपक्षे च साध्यस्य व्यापक इति संक्षेपः।

**एवंभूते**तरत्वे सति परत्वासमवायिकारणानाधारः सन्नसर्वज्ञो वा शब्देतरानित्यविशेषगुणाश्रयो वा संस्काराश्रयो वा जीवो घटवद्व्यापकः इत्यनुमानान्तराण्यपि प्रत्युक्तानि वेदितव्यानि। कस्मात्। अनात्मत्वोपाधेस्तत्रापि वक्तुं शक्यत्वात्। यथा चास्य साध्यव्यापकत्वं साधनाव्यापकत्वं च, तथा प्रव्यक्तमेवेति कृतं तन्निरूपणोपाधिना निरुपाधिष्विति।

**तथा च** वेदशास्त्रानुमानानामतत्परत्वसोपाधिकत्वाभ्यां जीवाणवासाधकत्वे निष्प्रमाणकोऽयं जीवाणुपक्षः कथं दोषैर्निर्मुच्येत। दोषानिर्मुक्तो वा कथं वैदिकैरुपादीयेतेति भवतां पार्ष्णिका निरीक्षन्तां किमस्माकं निरीक्षितनिरीक्षणेन। निरीक्षन्ते तु सुमेधसो "ननिर्मुच्येत नवोपादीयेत" इति। तस्माद्व्यापक एव जीवात्मा नाणुरित्यचलः सिद्धान्तः।

**स्यादेतत्।** माभूद् वेदशास्त्रानुमानानामतत्परत्वसोपाधिकत्वाभ्यां जीवाणवप्रसाधकत्वं, माभूच्च जीवोऽणुरिति प्रामाणिकः पक्षः। तथपि व्यापके जीवे किमायातं, येनायमचलं सिद्धान्त्यते। नहि स तदप्रामाणिकत्वमात्रेण सिद्धान्ततामुपयाति सिद्धान्ततामुपयन्वा कथंचिन्निश्चलति। प्रमाणाधीना हि वस्तुस्थितिः, यावत्तत्र प्रमाणं नोपन्यस्यते, कथं तावद्व्यापको जीवः

सिद्ध्येत, असिद्धो वा कथं निश्चलेदिति। **न**। प्रमाणसिद्धत्वात्। नच वयं तदप्रामाणिकत्वमात्रेण व्यापकं जीवं सिद्धान्तयामः। किमुत। प्रमाणसिद्धत्वादिति। यस्तावदर्थः प्रमाणेन सिध्यति सच न सहस्रेणापि पुरुषायुषैः कथंचिदवचलति। प्रत्युत यथायथा परीक्ष्यते तथातथा निश्चलत्येव। प्रमाणसिद्धश्च व्यापको जीवः। तद्यथा प्रमाणं "यो योऽपाकजः सन्यावद्द्रव्यभावी न भवति नाऽसौ शब्दवन्मूर्तविशेषगुणः इति। ज्ञानमप्यपाकजं सद्यावद्द्रव्यभावि न भवति। तस्मात् न तन्मूर्तविशेषगुणः। किमुत। अमूर्तविशेषगुण इति। यश्च तत्रामूर्तः पदार्थः, स च जीवः, तस्माद्व्यापको जीव" इति। तथाच महर्षीणां सूत्रमपि **वै अ० ७ आ० १ सू० २२**

**"विभवान्महानाकाशस्तथा चात्मा"** इति। तत्र भाष्यं च। "आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं च, तथाचात्मेति वचनात्परममहत्परिमाणमिति। श्रुतिश्च **बृह० अ० ६ ब्रा० ४ श्रु० २२ "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु"** इति। स्मृतिरपि **गीता अ० २ श्लोक २४**

**"नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः"** इति

तस्माच्छ्रुत्यादिप्रमाणसिद्धत्वाद्व्यापको जीव इति सम्यग्राद्धान्तितम्।

**एतेन** निष्फलत्वादयो दोषा अपि प्रत्युक्ताः। नहि प्रामाणिकेष्वर्थेषु दोषाः संभवन्ति। ननूक्ता दोषाः। सत्यम्। तान्न विस्मरामः। किंतर्हि। न विमृश्योक्ता इति वच्मः। किंकारणम्। यत्कारणं, सर्वथा तेषामत्रासंभव इति। कथम्। इत्थम्। त्रयो वाव भवदुक्ता दोषाः स्मर्यन्ते, येष्वादिमो दोषः फलाभाव इति। स च नोपवर्णयितुं शक्यते। कस्मात्। दूरादिदेशेषु तत्तद्भोग्योत्पत्तेरेव तत्फलत्वसंभवात्। नचैकस्यार्थस्यैकं फलमिष्यते, येन भवदुक्तं तत्र सङ्गच्छेत। किमुत। अनेकमिति। यथाह्येकोऽपि वह्निः पदार्थोऽनेकफलक इति साक्षाद्दर्शनम्। तथा जीवोऽप्यनेकफलक इत्यार्षदर्शनम्। अस्ति वाव तत्फलमेकं शरीरचेष्टाद्युपपत्तिः। अपरं च दूरदूरतरदूरतमविषयेषु तत्तद्भोग्योत्पत्तिरिति। तत्र शरीरचेष्टाद्युपपत्तिस्तावत्कथंचिदुपपद्येतापि दूरादिविषयेषु तत्तद्भोग्योत्पत्तिः परं व्यापकं विना नोपपद्यते। कथमुपपद्येत।

जीवादृष्टकारिता हि तत्तद्भोग्योत्पत्तिः । यावज्जीवादृष्टं तं तं देशं न समवायेत । कथं तत्र तत्र तत्तद्भोग्यमुत्पादयेत् । नहि तत्तद्देशेनासंबद्धमदृष्टं तत्तद्भोग्योत्पादनेऽलं संपद्यते । अतिप्रसङ्गात् । नचात्मसमवेतस्यादृष्टस्य साक्षात्तत्तद्देशसंबन्धो वा घटते । स्वातन्त्र्याभावात् । तत्संबन्धस्त्वावश्यक इति स्वाश्रयसंबन्धद्वारेण तस्य संबन्धो वक्तव्यः । तदाश्रयश्च जीवो न वावान्यः कश्चित् । स चेदणुपरिमाणः स्यात् कथं तद्द्वारेणाप्यदृष्टं तं तं विषयं संबध्नीयात् । स्वयमसंबद्धस्य तस्यादृष्टसंबन्धकत्वानुपपत्तेः । तस्माद्व्यापको जीव इत्यायातम् । स तु तत्र तत्र देशे तत्तद्भोग्यमुत्पादयितुमदृष्टसंबन्धकतया नित्यं चरितार्थ एव न वावाचरितार्थ इति शक्यकल्पनम् । तथाच कथं भवदुक्तो दोषः प्रसज्येत । कथं वा जीवोऽयं सफलो न भवेदिति निरन्तरसन्तर्बुद्ध्या चिन्तयितव्यम् । किमस्माकं तत्र चिन्तनेन ॥ १॥

गमनागमनयोरयुक्तत्वं वाव द्वितीयो दोषः। सोऽपि बुद्ध्यपाटवनिबन्धन इति । किंकारणम् । उपाधिगमनागमनाभ्यां जीवगमनागमनयोरपि युक्तत्वात् । सत्यं व्यापके जीवे गमनागमनयोरयोगः, नच तत्र किंचिन्निगदामः । किं तर्हि । यस्तत्र शास्त्रराद्धान्तस्तं प्रकाशयाम इति । नहि शास्त्रं निरुपाधिकस्य जीवस्य गमनागमने प्रब्रूते, येनास्मत्पक्षे भवदुक्तो गमनागमनयोरयुक्तत्वं दोष आसज्येत। किमुत । सोपाधिकस्येति । कस्मात् । यस्मात्सोपाधिक एवादृष्टजन्ययोः सुखदुःखयोर्भोक्ता भवितुमर्हति, न निरुपाधिक इति । कथम् । उच्यते । सुखदुःखानुभवलक्षणो हि भोगः । स च न नित्यः। किमुत। मनोजन्य इति । नच निरुपाधिकस्य जीवस्य मनो विद्यते । यस्य वा मनो विद्यते नासौ निरुपाधिकः । किमुत । सोपाधिक इति तत्र तस्यैवोपाधित्वात् । यश्च सोपाधिकः स एव पुनर्द्रष्टा श्रोता मन्ता कर्ता विज्ञानात्मा पुरुषः। स एव च कर्मफलयोः सुखदुःखयोर्भोक्तेति निष्कण्टकः पंथा । वृद्धपरम्परागतत्वात् । शास्त्रसंमतत्वाच्च । अस्ति वावाऽत्र शास्त्रम् । तद्यथा **यजुर्वेदीयकठोप. अ० १ व० २**

**"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"** इति

यदा वाव सोपाधिक एवादृष्टजन्ययोः सुखदुःखयोर्भोक्ता न निरुपाधिक इति। तदा तस्यैव गमनागमने शास्त्रमाचष्टे न निरुपाधिकस्येति निर्गलितार्थः । किं तर्हि । सोपाधिकश्च नित्यमुपाधिधर्मेति नाभातम् । स यथा यथोपाधिर्भवति, तथा तथा भवन्निवालक्ष्यते, तथातथा च व्यपदिश्यते ।

नच तत्र किंचिदूनं नाम, यदुपाधिसंबन्धान्न भवेत् । यथाहि वाव सौरो वा चान्द्रमसो वा गगनायितप्रकाशस्तत्तदुपाधिसंबन्धात्तेषु तेषु ऋजुवक्रादिभावमापन्नेषु सत्सु तत्तद्भावमापन्न इव प्रतीयते । यथा वा व्यापकोऽप्याकाशो घटमणिकमल्लिकाद्युपाधिसंबन्धात्तेषु तेषु गच्छत्सु चागच्छत्सु च गच्छन्निवागच्छन्निव चाभिधीयते । तथा व्यापकोऽपि जीवो नाम मनउपाधिसंबन्धादस्माल्लोकादमुं लोकममुष्माल्लोकाच्चेमं लोकं स्वकृतकर्मभोगाय गच्छति तस्मिन्गच्छन्निवागच्छति चागच्छन्निव शास्त्रेण व्यपदिश्यते । तद्व्यपदेशश्च सर्वस्तदुपाधिपुरस्सर एव न वाव स्वतन्त्र इति न किंचिदवद्यम् । युक्ततरत्वात् । उक्तं चैतत्साङ्ख्यदर्शने । तद्यथा । **सां० अ० ६ सू० ५८**

**"गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत्."** इति

**यद्वा** यत्कृतो हि यस्य फलसंबन्धस्तद्व्यापारोऽपि तस्यैवेति महतां निर्णयः । तत्र यथा योद्धृषु वर्तमानोऽपि युद्धव्यापारो "नृपतिर्युध्यतीति तत्स्वामिनि नृपतौ व्यपदिश्यते । किं कारणम् । यत्कारणं स हि तत्फलस्य भोक्तेति । तथा मनसि वर्तमानोऽपि गमनागमनव्यापारो "जीवो गच्छति चागच्छतीति शास्त्रेण तत्स्वामिनि जीवे व्यपदिश्यते । यत्कारणं जीवो हि तत्फलस्य भोक्तेति । मनस्तु परिच्छिन्नत्वाज्जीवपुण्याऽपुण्याभ्यां गमनागमनाश्रय इति सर्वं समञ्जसम् । तथाच जीवगमनागमनयोस्तद्गमनागमनाभ्यां सामञ्जस्ये क्व तु पुनस्तदयोगावकाश इति जीवाणुवादिभिरेवोदाहरणीयम् । किं तद्योगं पश्यतामस्माकं तत्र निरर्थकायासेन । २ ।

सुखदुःखयोः साङ्कर्यप्रसङ्गस्तावत्तृतीयो दोषः, सोऽप्यज्ञानमूलक एव । किं कारणम् । तद्व्यवस्थापकादृष्टस्य तत्र विद्यमानत्वात् । तत्र हि सङ्करः प्रसज्यते यत्र कश्चिद्व्यवस्थापको न भवेत् । यत्र तु कश्चिद्व्यवस्थापको विद्यते, कथं तत्र सङ्करः प्रसज्येत, कथं वा सङ्कर आशङ्क्येत । न चास्मत्पक्षे व्यवस्थापकाभावो वाव वक्तुं शक्यते । जीवादृष्टं ह्यस्मत्पक्षे व्यवस्थापकं । तच्च यत्र जीवात्मनि वरीवृत्यते, तस्य भोगायतनं शरीरमुत्पाद्य तावद्व्यवस्थापयति "यददृष्टारब्धं यच्छरीरं तत्तस्यैव भोगायतनं नान्यस्येति । कस्मात्पुनरदृष्टव्यवस्थेति । पूर्वतनशरीरव्यवस्थातोऽदृष्टव्यवस्थेति । यस्य जीवस्य तच्छरीरमासीत् तद्धेतुकादृष्टमपि तस्यैव नान्यस्येति । कस्मात्पुनस्तच्छरीरव्यवस्थेति । तदारम्भकादृष्टव्यवस्थातस्तद्व्यवस्थेति । यस्य जीवस्य

तददृष्टं, तदारब्धं शरीरमपि तस्यैव नान्यस्येति । तच्चक्रं च बीजाङ्कुरवदनिशमनुवर्त्तते इति न कश्चिद्दोषः । अतएवोक्तमाचार्यैर्न्यायदर्शने **तद्यथा.**

**न्या० अ० ३ आ० २ सू० ६९–७०**

**"शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥६९॥**
**एतेनानियमः प्रत्युक्तः ॥ ७० ॥"** इति

तत्र "यत्तु सर्वात्मनां सुखदुःखसंवित्त्यायतनं शरीरं प्रत्यात्मं व्यवतिष्ठते, तत्र शरीरोत्पत्तिनिमित्तं कर्म व्यवस्थाहेतुरिति विज्ञायते । परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीरमुत्पाद्य व्यवस्थापयति । तदेवं शरीरोत्पत्तिनिमित्तवत्संयोगनिमित्तं कर्मेति विज्ञायते । प्रत्यात्मव्यवस्थानं तु शरीरस्यात्मना संयोगं प्रचक्ष्महे । तेनैतेनानियमः प्रत्युक्तः" इति तद्भाष्याऽभ्युच्चयार्थः । तथाच साधारणेऽपि मनोयोगेऽदृष्टवैचित्र्येण तदारब्धभोगायतनशरीराणां मनसां च साधारण्याभावात् न सर्वेष्वात्मसु सुखदुःखोत्पादः शक्यसंभव इति न सङ्करावकाशो न वा तदाशङ्केति व्यवस्थीयते । युक्ता चैषाऽदृष्टनिबन्धनी व्यवस्था । तदनभ्युपगम्यमानायां त्वीश्वरस्यापि तद्भोगप्रसङ्गो दुर्वारणः प्रसज्येत । किं कारणम् । तस्यापि व्यापकत्वेन जीववत्सर्वशरीरेषु सन्निधानाविशेषात् । अस्ति जीववद्व्यापक ईश्वरः । सर्वाणि शरीराणि च तस्य वासायतनानि सुखदुःखहेतुर्मनोयोगश्च तुल्य इति । तथापि न तस्य सुखदुःखभोगः संभवति । न वाऽभ्युपगम्यते । किं तत्र कारणम् । इदमेव कारणम् । यत्सन्निधानाविशेषेऽपि शरीराणि तानि जीववन्न तददृष्टारब्धानीति । यदा वाव सन्निधानाविशेषेऽपि शरीराणि तानि तददृष्टारब्धत्वाभावाद्धेतोर्न तस्य भोगायतनानीति सानन्दमभ्युपेयते । तदा जीवानां व्यापकत्वेन सर्वशरीरेषु संनिधानाविशेषेऽपि न सर्वाणि तानि सर्वेषां भोगायतनानि । किमुत । यच्छरीरं यददृष्टारब्धं तत्तस्यैव भोगायतनं नान्यस्येत्येतदपि सानन्दमभ्युपेयताम् । किमत्राग्रहेण बहुना । अदृष्टशरणस्योभयत्रापि तुल्यत्वात् । तत्सिद्धं तत्तज्जीवादृष्टस्य तत्रतत्र व्यवस्थापकत्वसंभवात् न सुखदुःखयोः साङ्कर्यप्रसङ्गो दोष इति सर्वं रमणीयमिति ।

**तथाच** जीवानां व्यापकत्वेऽपि निष्फलत्वादिदोषाणामसंभवात्तद्विभुभावस्य च प्रामाणिकत्वादप्रामाणिकत्वाच्च जीवाणुभावस्य कथं न व्यापको जीवः

सिद्ध्येत्। सिद्धे वाव व्यापके जीवे कथं न व्यापकत्वं हेतुस्तत्र व्यभिचरेत्। व्यभिचरिते वाव व्यापकत्वे हेतौ कथं न भवदनुमानं दुःष्येदिति स्वनेत्रे निमील्य किंचिद्विभाव्यताम्। किमु तत्र हेत्वाभासतत्त्वविदां विचक्षणानां तद्विभावनेन। तस्मादनैकान्तिकत्वाद्धेतोरीश्वरो न मूर्तिमान् व्यापकत्वात् कालादिवदित्यनुपपन्नम्।

**न भवेन्मूर्तिमानीशो व्यापकत्वेन हेतुना।**
**यदि निरङ्कुशं ब्रूषे नूनं ते बालचेष्टितम्॥ १॥**
**हेतुदोषग्रहग्रासग्रस्ताखिलकलेवरम्।**
**विकलं यन्न ते भाति मानं पंचत्वशङ्कया॥ २॥**
**तस्मान्नैवं प्रयोक्तव्यं मानं मानविदां पुरः।**
**दुष्टमानप्रयोगाद्धि मानं मान्यस्य हीयते॥ ३॥**

**किंच** न केवलं व्यापकत्वं हेतुरनैकान्तिक एव किमुत कालात्ययापदिष्टोऽपि। कश्च कालात्ययापदिष्टो हेतुरिति। यस्तावत्कालातीत इति। कस्मात्।

**"कालात्ययापदिष्टः कालातीतः"**[1]

इत्यार्षाम्नानात्। यो हि हेतुः प्रत्यक्षतो वाऽनुमानतो वा शब्दतो वा स्वसाध्यविपरीतार्थनिर्णयेन साध्यसंदेहविशिष्टं कालमत्येति, सोऽयं कालस्यात्ययेनापदिश्यमानः कालात्ययापदिष्टः कालातीत इत्याख्यायते। यथा "वह्निरनुष्णो द्रव्यत्वात् १अश्रावणः शब्दो गुणत्वात्२ अशुचि च नरशिरःकपालं प्राण्यङ्गत्वात् ३" इति। तत्राद्यो हेतुः प्रत्यक्षतः स्वसाध्यविपरीतार्थनिर्णयेन साध्यसंदेहविशिष्टं कालमत्येति। द्वितीयस्त्वनुमानतः। तृतीयः किल शब्दतः इति विभागो बोद्धव्यः। व्यापकत्वं हेतुरपि तथा शब्दानुमानाभ्यां स्वसाध्यविपरीतार्थनिर्णयेन साध्यसंदेहविशिष्टं कालमतिपतति। तस्मात्सोऽपि कालात्ययापदिष्टः कालातीतो हेत्वाभास इति। तत्र शब्दानुमानयोर्मध्ये शब्दं वाव शब्दनिरूपणवेलायां निरूपयितास्महे। तदधिगन्तुकामास्तावत्प्रतीक्षन्ताम्। अनुमानं खल्वधुना निरूप्यते। यस्माद्व्यापकत्वस्य हेतोः स्वसाध्यविपरीतार्थनिर्णयेन कालात्ययापदिष्टत्वमिति। किंतदनुमानम्। **उच्यते** "यो यश्चेतनः सन्कार्यस्य कर्ता स च सर्वो जीव इव मूर्तिमानिति लौकिकः प्रतिबन्धः। भगवानीश्वरोऽपि वाव जगतः कार्यस्य कर्ता

---

१ न्या० अ० १ आ० १ सू० ९।

चेतनश्च, तस्मात्सोऽपि मूर्तिमाञ्शरीरीति सदपदेशः। **बाढं**। किं तर्हि। न्यूनमुच्यते। कस्मात्। कर्मणोऽपि तत्प्रयोजकत्वात्। नहि चेतनत्वे सति कर्तृत्वमात्रं वाव मूर्तिमत्त्वप्रयोजकं भवति। किमुत। कर्मापि। यस्य चेतनस्य कर्त्तुर्ह न किंचित्कर्म विद्यते। नाऽसौ कर्हिचित्कथमपि किंचित्प्रतिलभते किमु वाच्यमात्मनीनां मूर्तिमिति। तच्च कर्म जीवे वर्तमानमपि भगवति पक्षे तावन्नोपावर्तते। तस्मिँश्चावर्तमाने कथमीश्वरो मूर्तिमानिति प्रयुज्येत। प्रयोजकाभावे प्रयोज्याभावस्याप्यावश्यकत्वात्। तस्माद्भवदपदेशो न सदपदेशः। किमुत। अनपदेश इति। **मैवं वक्तव्यम्**। किंकारणम्। मूर्तिमात्रं प्रति तत्प्रयोजकत्वस्यानङ्गीकारात्। सत्यं कर्म मूर्तिं प्रयोजयति, तथापि न मूर्तिमात्रमिति ब्रूमः। चेन्मूर्तिमात्रं तत्प्रयोजयेत्। तदा कथंचिद्भवदुक्तमपि सङ्गच्छेत, परं न च तत्तथाभिमन्यते। किं कारणम्। व्यभिचारात्। अस्ति तावद्योगिनां लीलाविग्रहेषु व्यभिचारः। ते हि तेषां स्वसङ्कल्पमात्राज्जायन्ते न स्यात्कस्माच्चित्कर्मणः। चेत्कर्मणस्ते जायेरन् तदा लीलाविग्रहास्ते न जात्वाख्यायेरन्। लीलाविग्रहास्त्वाख्यायन्ते। तस्मात्सङ्कल्पप्रभवास्ते विग्रहाः न कर्मप्रभवा इति। सङ्कल्पप्रभवा अपि नच कर्मापेक्षन्ते। तदपेक्षायां तेषां भोगनाशापत्त्याऽशक्यनिवारणप्रसङ्गात्। निवार्यन्ते तु यथाकामं योगिभिस्ते लीलाविग्रहा इति न कर्मापेक्षप्रभवास्ते। किमुत। सङ्कल्पमात्रापेक्षप्रभवा इति। तथाचोक्तं योगदर्शने

"यदा तु योगी बहून् कायान्निर्मिमीते तदा किमेकमनस्कास्ते भवन्त्यथाऽनेकमनस्काः" इति। तत्राह. **पा० ४ सूत्रम् ९**

**"निर्माणचित्तान्यस्मितामात्रात्"** इति।

यावन्तो वाव योगिसङ्कल्पनिर्मिताः कायास्तावन्त्येव तन्निर्मितानि चित्तानि भवन्ति नानूनानि नाप्यूनानि, तानि च सर्वाणि कायचित्तान्यस्मितामात्रात्=सङ्कल्पमात्रादाविर्भवन्तीति सूत्रार्थः। तत्र भाष्यं च।

**"अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति ततः सचित्तानि भवन्ति"** इति।

किंतर्हि। यदा च सङ्कल्पमात्रजेषु योगिनां लीलाविग्रहेषु विशदो व्यभिचारः "सत्यपि मूर्त्तित्वे कर्मप्रयोज्यत्वाभाव इति। तदा यद्यच्छरीरं तत्तत्कर्मप्रयोज्यमिति कथं मन्यामहे। निश्चिते व्यभिचारे तन्मननायोगात्। मूर्ति-

मात्रं प्रति तस्याप्रयोजकत्वे तु नास्मदपदेशोऽनपदेशः। किमुत। सदपदेश इति। चेत्सदपदेश इति। तदा कथमूनः स्यात् कथमनूनो वा न स्यादित्यूनं पश्यद्भिरेव भणितव्यम्। किमनूनं पश्यतामस्माकं तत्र भणितेन।

**भवतु** वा सर्वत्र प्रयोजकं कर्म। तथापि न कश्चिद्दोष इति। किं कारणम्। भगवदात्मनि पक्षेऽपि तस्य सद्भावात्। जीवानां कर्म हि वाव भगवदात्मनि सद्भवति, यत्कारणं स हि सर्वेषां तेषामधिष्ठानमिति।

**यद्वा** ये जीवा भगवद्दिदृक्षाकुलचेतसो नित्यं तद्दर्शनेप्सयाऽतप्यं वा तपस्तन्वते अशक्यं वा कर्म कुर्वते। तेषामतप्यं वा तपस्तन्वतामशक्यं वा कर्म कुर्वतां यत्कर्म तदेव कर्म भगवन्मूर्तिप्रयोजकं सद्भगवदात्मनि सद्भवति। यत्प्रयुक्तस्तावत्करुणालयो भगवान्भक्तवत्सलो भक्तचित्तानुमोदार्थं तत्पुरुषकारमनुगृह्णन् लीलामात्रेण स्वकामनया तत्तत्कामितरूपाणि बिभ्रत्सन्ननेकधा लोकोपकाराय कल्पते। तदेतत्सौभाग्यं च भारतीयानामेव न वर्षान्तरीयाणामिति धन्या वयं येषां स्वयं भगवानवततार।

**तत्सुखाद्वैतबोधात्मस्वभावहरये नमः।**
**वेदान्तैकप्रमाणाय कुतर्काणामभूमये॥ १॥**

तच्चेदृक्कर्म भगवदात्मनि तस्मिन्सद्भवदपि न तन्महिमापकर्षाय संपद्यते। यत्कारणं नित्यमहिमाऽसौ परमेश्वरो नानित्यमहिमेति सर्वमवदातम्।

**अस्तु** वा भगवतः परमेश्वरस्यात्मीयकर्मसद्भावः। कस्मात्। आत्मत्वाविशेषात्। नहीश्वरस्य तावदात्मकल्पात् कल्पान्तरमुपपद्यते येन जीवात्मपरमात्मनोरात्मत्वमविशिष्टं न स्यात्। यथा हि चेतना जीवास्तथैव चेतन ईश्वर इति। जीवाश्च कर्मवन्त इति भगवानीश्वरोऽपि कर्मवानिति शक्यं वक्तुम्। तत्र जीवानां वाव गुणहेतुकं कर्म, भगवतः परमेश्वरस्य तु गुणाहेतुकं कर्मेति न कश्चिद्दोषः।

**स्यादेतत्।** मापप्तदन्यः कश्चिद्दोषः शास्त्रविरोधस्त्वापतिष्यति, स एव च दोषाणामुत्तमो दोष इति। नह्यास्तिकानां शास्त्रविरोधो नाम न कथंचिद्दोषायते। शास्त्रं हि तेषां परमं धनम्। निःश्रेयससाधनत्वात्। तेन चेद्विरोध आपतेत्। कथं न दोष आगच्छेत्। नच शास्त्रं वाव भगवतः परमेश्वरस्य किंचित्कर्म विदधाति, येन विरोधो न स्यात्। अपि च तस्य

तत्प्रतिषेधति । न्यूनमुच्यते । किं तर्हि । तत्स्पर्शमात्रं प्रतिषेधति । यदा चेद्दक्शास्त्रप्रतिषेधः तदा दूरे तस्य कर्मसद्भाव इति । तत्र शास्त्रं च

**योग० पा. १ सू. २४।**

**"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"** इति

**अत्रोच्यते।** नूनं शास्त्रतत्त्वानभिज्ञा भवन्तः केवलं शास्त्रं ब्रुवते, नच तस्य तत्त्वमपि मन्वते । चेच्छास्त्रस्य तत्त्वं मन्वीरन् तदा न स्यादित्थमाशङ्केरन् । नहि शास्त्रं खलु भगवतः परमेश्वरस्य कर्ममात्रं प्रतिक्षिपति येन तद्विरुन्ध्यात् । किमुत यद्गुणहेतुकं कर्म शुक्लं वा कृष्णं वा शुक्लकृष्णं वा, तत्तस्य प्रतिक्षिपति । किं कारणम् । यत्कारणं जीवानामेतत्कर्म नेश्वरस्येति । जीवा हि प्रकृतिवशगाः सात्विकं वा राजसं वा तामसं वा कर्म कुर्वते, तत्फलं चोपभुञ्जते, तद्वासनां चानुशेरते नत्वीश्वर इति । तस्माद्यत्तेषां जीवानां तादृक्कर्म तन्न कर्हिचिदीश्वरं परामर्ष्टुं शक्नोति । भिन्नाश्रयत्वात् प्राकृतिकत्वाच्च । तेन युक्तस्तस्य तदपरामर्श इति न किंचिद्विरुध्यते । भाष्यकृतामप्येतत्संमतम् । यत्तेपि सूत्रं व्याचक्षाणाः **"कुशलाकुशलानि कर्माणि"** इति व्याचक्षतेस्म न कर्ममात्राणीति । तद्यथा भाष्यम् ।

**"अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि,**
**तत्फलं विपाकः, तदनुगुणा वासना आशयाः"** इति

किं तर्हि भगवतः परमेश्वरस्य कर्म । यद्गुणाहेतुकं न शुक्लं न कृष्णं न शुक्लकृष्णं किमुताशुक्लाकृष्णमिति संचेतत । किं तत्र प्रमाणम्। शास्त्रम् । शास्त्रं हि वाव कर्मद्वैविध्यमाह । तत्रैकं गुणाहेतुकं कर्म, तदपरं च गुणहेतुकमिति । गुणहेतुकं तावत् गुणानां त्रैविध्यात्त्रिविधम् । तच्च जीवानामेव नत्वीश्वरस्येति । गुणाहेतुकं च कर्म तद्विलक्षणत्वादप्राकृतिकत्वाच्चैकविधमेव । तच्चेश्वरस्य वा तत्कल्पस्य योगिनो वा विज्ञातव्यं नतु जीवानामिति । तद्यथा शास्त्रम्

**योग. पा. ४–सू. ७–**

**"कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्"** इति ।

नन्विह योगिन इत्युक्तं नचेश्वरस्येति । मैवं भ्रमितव्यम् । ईश्वरस्यापि योगित्वात् । अत एव च तत्र भवान् भाष्यकृद्वात्स्यायनो महर्षिरपि

"**तत्कारितत्वादहेतुः**" इति तुर्याध्यायस्यैकविंशतितमे सूत्रे भाष्ये भगवतः परमेश्वरस्य तत्कर्मसद्भावं व्याचचक्ष । तथाच तत्रत्यं भाष्यम् ।

"**गुणविशिष्टमात्ममात्रमीश्वरः। तस्यात्मकल्पात्कल्पान्तरानुपपत्तिः। अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसंपदा च विशिष्टमात्मान्तरमीश्वरः। तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यम् । संकल्पानुविधायी चास्य धर्मः प्रत्यात्मवृत्तीन् धर्माधर्मसंचयान् पृथिव्यादीनि च भूतानि प्रवर्तयाति। एवं च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम्**" इति ।

तदेवं खलु जीववदीश्वरस्यापि कर्मसद्भावान्न तन्निबन्धनः कश्चिद्दोषः इति सर्वं रमणीयम् ।

**ननु** मागात् कर्मनिबन्धनः कश्चिद्दोषः सर्वज्ञातृत्वसर्वभावाधिष्ठातृत्वाभावनिबन्धनो दोषस्त्वागमिष्यति। नहि योयो मूर्तिमान्सस सर्वः सर्वज्ञाता वा सर्वभावाधिष्ठाता वा भवितुमर्हति। दृष्टो हि वाव चैत्रो वा मैत्रो वा मूर्तिमान् परं नासौ सर्वज्ञाता वा सर्वभावाधिष्ठाता वा। किमुत। अल्पज्ञाता अल्पभावाधिष्ठाता चेति । चेदीश्वरोऽपि मूर्तिमानभविष्यत् तदाऽवश्यमल्पज्ञातालपभावाधिष्ठाता चासेत्स्यत्। अस्ति च सर्वज्ञाता सर्वभावाधिष्ठाता च भगवानीश्वर इति। **नैतत्सारम्**। बालव्यामोहनमात्रत्वात् । बालव्यामोहनमात्रं खल्वेतत्सर्वं "यन्मूर्तिमतां वाव सर्वज्ञातृत्वसर्वभावाधिष्ठातृत्वाभावप्रतिपादनमिति। नहि तावद् यो यो मूर्तिमान् स स सर्वः सर्वज्ञाता वा सर्वभावाधिष्ठाता वा न भवतीति नियन्तुं शक्यते। किं कारणम्। यत्कारणं मूर्तिमतामपि योगिनां सर्वज्ञातृत्वं सर्वभावाधिष्ठातृत्वं च शास्त्रेणाम्नायते। शास्त्राम्नातं चास्मदीयानां युष्मदीयानां च सर्वेषामविशेषेण शिरोधार्यमेव। न तत्रान्यतमस्यापि किंचिद्वक्तव्यमवशिष्यते। शास्त्रस्यैकान्तेन व्यवस्थितार्थत्वात् । अत एवोक्तं भगवता भगवद्गीतायाम्।

तद्यथा अ. १६ श्लो. २४

**"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि"** इति

किंतच्छास्त्रं । एतच्छास्त्रम् । तद्यथा **योग. पा. ३ सू. ४९**

**"सत्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" ४९** इति

**भाष्यम्** "निर्धूतरजस्तमोमलस्य बुद्धिसत्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य **सर्वभावाधिष्ठातृत्वं** सर्वात्मानो गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपतिष्ठन्ते इत्यर्थः । **सर्वज्ञातृत्वं** सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः । इत्येषा विशोका नाम सिद्धिः यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरतीति" । तथा प्रशस्तपादभाष्यं च **"अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुगृहीतेन मनसा स्वात्मान्तराकाशदिक्कालपरमाणुवायुमनस्सु तत्समवेतगुणकर्मसामान्यविशेषे समवाये चावितथं स्वरूपदर्शनमुत्पद्यत** इति । तथा **"सौक्ष्म्यादनुपलब्धिरिति** प्रथमाध्यायस्थे नवाधिकशततमे सूत्रे सांख्यप्रवचनभाष्यं च **"तयोः पूर्वोक्तयोः प्रकृतिपुरुषयोरनुपलब्धिस्तु सौक्ष्म्यादित्यर्थः, योगजधर्मस्य चोत्तेजकतया प्रकृतिपुरुषादीनां प्रत्यक्षप्रमा भवतीति ।** किंतर्हि । यदा वावैवं मूर्तिमत्सु सत्स्वपि योगिषु शास्त्रं सर्वज्ञातृत्वं सर्वभावाधिष्ठातृत्वं चाम्नाति, तदा मूर्तिमत्त्वेन व्याप्यमाने ते द्वे न कचिन्मूर्तिमत्त्वाभावं तावद्व्याप्नुत इत्यधिगम्यते । तदधिगमे च भगवतः परमेश्वरस्य मूर्तिमत्त्वसाधनेऽपि न तदभावनिबन्धनः कश्चिद्दोष आगच्छतीति निश्चेतव्यम् । भावव्याप्तेन वाव तदभावानुमानानवकाशात् । स्पष्टं चैतदुपाधिवित्सु महाभागेषु इति कृतमधिकेन ।

**तस्मात्** जगतः कार्यस्य कर्ता चेतनोऽसौ भगवानीश्वरो जीव इव मूर्तिमानिति मानान्तरेण स्वविपरीतार्थनिर्णयात् कालात्ययापदिष्टोऽयं व्यापकत्वं हेतुरिति निरवग्रहं निष्पन्नं । यथा चानैकान्तिको हेतुर्वाव दुष्टत्वात् न स्वसाध्यसाधनक्षमः तथा कालात्ययापदिष्टोपि इत्यतिरोहि-

तमेतत् । तथा चामूर्तिरयमीश्वर इति प्रतिजानतां निराकारैकवादिनामनु-
मानं तत्र प्रमाणमित्येतदप्यर्थतो गगनकुसुमायितमेव । न जातु तत्र कंचित्
सारमवकलयाम इति कृतमिह तन्निरूपणायासबाहुल्येन प्राज्ञंमन्येषु तेषु ।

**यदा हेतोरसिद्धत्वादशक्यं तन्निरूपणम् ।**
**कुतस्तद्धेतुकं सिध्येदीक्षस्वापक्षपाततः ॥ १ ॥**
**मूर्त्यभावोऽनुमानेन न कथंचित्प्रसिध्यति ।**
**किं पुनस्तत्प्रलापेन वाचोविग्लापनं यतः ॥ २ ॥**
**तस्माच्चर्चानुमानस्य त्यज्यतां मेऽत्र संमतिः ।**
**सर्वशक्तिमति देवे का नु मूर्त्तेश्चमत्कृतिः ॥ ३ ॥**

२

**स्यादेतत्** मामास्तु जीवबुद्धिसत्त्वप्रसूतत्वेन दुष्टत्वाद्भगवतः परमेश्वरस्य मूर्त्यभावमनुमानं । वेदस्तं प्रमास्यते । स हि सर्वज्ञकल्पो दीप इव सर्वार्थावभासकः । न तस्य किंचिदविषयीभूतमस्ति यन्न प्रमिमीत । प्रमिमाणो वा विशयं वा विपर्ययं वा प्रसुवीत । किं कारणम् । यत्कारणं भगवद्बुद्धिसत्त्वप्रसूतत्वेन निर्दोष इति । भवतितावद्भगवद्बुद्धिसत्त्वप्रसूतो वेद इति निरपवादम् । ऋषिभिराम्नानात् । तद्यथा परमर्षिर्भगवानौलूक्यः

**वै. अ० ६–आ० १–सू. १.**

**" बुद्धिपूर्वा वाक्यकृतिर्वेदे "** इति ।

तत्र "भगवद्बुद्धिपूर्विका वाक्यकृतिर्वेदे इति सूत्रार्थः । भगवाँश्च निरस्तसमस्तपुंदूषणोऽतीतानागतप्रत्युत्पन्नं वस्तुजातं याथातथ्येन साक्षादवभासयते । तद्बुद्धिसत्त्वप्रसूतो वेदोऽपि तथाभूतार्थजातमवभासयेदिति न कश्चिद्दोष इति । **मैवं वक्तव्यम्** । कस्मात् । व्याघातात् । यथाहि वाव वन्ध्या मे मातेत्येतद्वचनं व्याघातदोषदूषितं नश्रद्धेयं सुमेधसां, तथैव भवदुक्तमेतद्वचनं, न तद्विशिष्टं "यद्भगवद्बुद्धिसत्त्वप्रसूतो वेदो भगवन्मूर्त्यभावं प्रमास्यत' इति । नहि भो यद्यद्बुद्धिसत्त्वादुत्पद्यते तत्तन्मूर्त्यभावं प्रमिमीत इति क्वचिदस्ति निदर्शनम् । नहि कुलालबुद्धिसत्त्वप्रसूतो घटः कुलालमूर्त्यभावं प्रमिनोति। चेत्प्रमिनुयात् आत्मानं व्याहन्यात् । निमित्तापाये नैमित्तिकापायस्याप्युपपत्तेः।तथा चैतत् । कथम् । इत्थम् । विशि-

ष्टानुपूर्वीकः शब्दराशिर्हि वेदः । स च भगवद्बुद्धिसत्त्वप्रसूतोऽपि न भगवत्कण्ठताल्वाद्यभिघातमन्तरेणाभिव्यक्तुमर्हति । यत्कारणं कण्ठताल्वाद्यभिघातनियतेयं शब्दाभिव्यक्तिरिति । नचामी कण्ठताल्वादयो वा भगवच्छरीरमन्तरेण संभवन्ति । तस्माद्भगवच्छरीरं मुख्यं कारणमिति निर्विवादं । तस्मिन्निर्विवादे चेद्भवदादरार्थं शब्दराशिर्वेदस्तत्प्रत्याचक्षीत, तदा कारणभावे कार्याभाव इत्यवश्यमात्मानमपह्नुवीत । तथाच विशदो व्याघात इति विरमामः ।

**ननु** मा विरन्तव्यं भगवद्बुद्धिसत्त्वप्रसूतोऽपि वेदो न भगवत्कण्ठताल्वादिभिरभिव्यज्यते । येन भगवन्मूर्तिमपाकुर्वन्नात्मानमपाकुर्यादिति । **वार्तमेतत्** । चेद्भगवद्बुद्धिसत्त्वप्रसूतोऽपि वेदो भगवत्कण्ठताल्वादिभिर्नाभिव्यज्येत, तदा तस्य वचनमेव न भवेत् । नह्यतदभिव्यक्तः शब्दस्तच्छब्द इत्युच्यते । अतिप्रसङ्गात् । अस्ति च भगवद्वचनं वेद इति शास्त्रविदां मार्गः । तेन चास्माकं यत्नतोऽनुगन्तव्यमिति । यस्मादाह भगवान्मनुः । **अ. ४–श्लो. १७८.**

**"येनास्य पितरो याता येन याताः पितामहाः ।**
**तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति"** इति ।

तथाचात्र शास्त्रम् । तद्यथा. **वै. अ० १–आ. १–सू० ३.**

**" तद्वचनादाम्नायस्य प्रामाण्यम् "** इति ।

यदा वाव भगवद्वचनत्वाद्वेदस्य प्रामाण्यं । तदाऽवश्यं भगवत्कण्ठताल्वादिभिरभिव्यक्तो वेद इति मन्तव्यम् । अन्यथा शास्त्रविरोधः स्यात् । स च न कल्याणकृदिति सत्यमुक्तं वार्तमेतदिति । **ननु** न शब्दो वेदः किंतर्हि विज्ञानमिति । **न** । प्रत्यक्षत्वानुपपत्तेः । अमूर्तं तावद्विज्ञानं । तत्स्वात्मनि प्रत्यक्षमपि नान्यस्य कर्हिचित्प्रत्यक्षायते । प्रत्यक्षश्च वेद इत्यनुपपन्नं विज्ञानं । न केवलं प्रत्यक्षानुपपत्तिरेव दूषणम् । अपि च भगवज्ज्ञानेयत्ताप्रसङ्गोऽपि बोद्धव्य इति । तस्मान्न विज्ञानं वेदः किमुत शब्द इति । शब्दत्वाच्च कण्ठताल्वादिभिरभिव्यङ्ग्य एवेति तदवस्थो व्याघातः । तदवस्थे वाव व्याघाते "भगवद्बुद्धिसत्त्वप्रसूतो वेदो भगवन्मूर्त्यभावं प्रमास्यते इति मनस्तरङ्गायितमात्रम् । अतः किं तेन ।

भवतु वा भगवद्बुद्धिसत्त्वप्रसूतो वेदस्तत्र मानम् । तथापि निर्णेत-व्यमवशिष्यते । किं तन्निर्णेतव्यम् । एतन्निर्णेतव्यम् । किं भगवद्बुद्धि-सत्त्वप्रसूतस्सर्वो वेदस्तत्र मानम् । किं वा तत्रत्या द्वित्रा मन्त्रा इति । न तावत्सर्वो वेदस्तत्र मानम् । कस्मात् । भूरिविषयत्वाभ्युपगमात् । अने-कविद्यास्थानोपबृंहितो वाव वेदः । नच स सहसैकविषयो भवितुमर्हति । नवाऽनेकशाखाभेदभिन्नस्य सर्वज्ञानाकरस्य तस्यैकविषयत्वमापादयितुं शक्यते । तस्मादनेकविषयो वेदोऽयं नैकविषय इति ।

तत्रत्या द्वित्रा मन्त्रास्तत्र मानमिति चेन्माभिमन्यध्वम् । यत्र सहस्रशो वैदिका मन्त्रा भगवन्मूर्त्योपादका विद्यन्ते । तत्र खलु तावका द्वित्रा मन्त्राः किं विधास्यन्ते । नहि बहुषु प्रतिपक्षेषु सत्सु समर्था अपि द्वित्रा "बोरा इवाङ्ग्लेषु किंचित्कर्तुं पारयन्ते । कस्मात् तदपेक्षया तेषां श-क्तितोहीनत्वात् । किं पुनर्न प्रमाणं ते । न, प्रमाणम् । कथं तर्हि प्रमाणम् । व्य-वस्थया प्रमाणं । व्यवस्था कर्तव्या । यथाहि परमार्थतोऽजोऽपि जीवात्मा निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियाद्युपाधिभिरुपरक्तो जनिधर्माऽसौ व्यप-दिश्यते । तदनुपरागाच्चामृतिधर्मोऽपि मृतिधर्मोपदिश्यते परमार्थतः शरीरर-हितोऽप्युपाधियोगाच्छरीरी दरीदृश्यते । तत्रच **कठोप. अ. १–व २–६.**

**"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥**

**इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ।**
**ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥**

इत्यादिका वैदिका मन्त्रास्तस्य तत्तद्रूपं पारमार्थिकमौपाधिकं चादाय स्व-स्वविषये व्यवस्थिताः संयुज्यन्ते । न जातु विरुध्यन्ते । व्यवस्थितविषयत्वात् । तथेहापि व्यवस्थेयम् । पारमार्थिकौपाधिकरूपाभ्यामत्रापि व्यवस्थासंभ-वात् । अस्ति भगवतः परमेश्वरस्य जगत्कार्यानुपयुक्तं केवलं साक्षि-कल्पं निरुपाधिकं वावैकं रूपम् । यत्र यौष्माकीणाः परमप्रिया द्वित्रा मन्त्राः सम्यग्व्यवस्थिताः सन्तो मान्यमासेवन्ते । तदपरं च जगत्कार्योपयुक्तं सर्वज्ञं सर्वशक्तिविचित्रमहिमाऽनन्तमूर्तिमायैकविग्रहं सोपाधिकं तस्य रू-पम् । यत्र वाव भगवन्मूर्त्योपादकाः सहस्रशो मन्त्रा भवन्मन्त्राविरोधेन सुतरां व्यवतिष्ठन्ते । तदेवं खलु स्वातन्त्र्येण स्वस्वविषये पारमार्थिके

चौपाधिके च भगवद्रूपे व्यवस्थानाच्चरितार्था मन्त्राः न जातु परस्परं विरात्स्यन्ते। न वा तत्रान्यतमा अप्यप्रामाण्यमापत्स्यन्ते। प्रत्युत स्वच्छन्देन लब्धात्मविषयत्वात् सर्वे सर्वत्र सर्वथा प्रमाणमेवेत्येषा व्यवस्था। युक्ता चेयम्। अन्यथा "परस्परविरोधे न प्रकारान्तरस्थितिरिति न्यायेन भवन्मन्त्रा अपि न प्रामाण्यमश्नुवीरन्। प्रामाण्ये वावार्द्धजरतीयं वा व्यश्नुवीरन्। तच्चायुक्तं। आर्यसंप्रदायविरोधात्। यत्राह भगवान्मनुः। **अ.२श्लो. १४**

**श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।**
**उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः"** इति

चेद्युक्तामपि मत्कृतां व्यवस्थामाग्रहाद् न यूयमातिष्ठध्वे। तदा शास्त्रापरिचितान्भवतः किं कुर्महे। यतोऽशक्ता वयं शास्त्रविमुखान्पृथग्जनानिव शास्त्रेण बोधयितुमिति।

**ननु** न वयं शास्त्रविमुखाः। यदा वयं शास्त्रं न मानीकुर्वीमहि तदैवमुपालभ्येमहि। वयं तु शास्त्रस्थान्कतिपयमन्त्रान् तत्र मानमातिष्ठामहे। तत्कथमुपालभ्येमहीति चेत्। तर्हि वक्तव्यम्। के ते मन्त्राः प्रमाणमिति। न तावत् **य. अ. ४० मं. ८.**

**"सपर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम्।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः"** ॥ ८ ॥

इति याजुषो मन्त्रस्तत्र प्रमाणम्। किं कारणम्। अर्थापरिज्ञानात्। नह्येष मन्त्रो वाव भगवतः परमेश्वरस्याकायत्वमाचष्टे। येन भवन्मनोरथकल्पोऽपि कथंचित्पच्येत। अपिच पूर्वमन्त्रोपात्तस्य 'एकत्वमनुपश्यतो विजानतः पुरुषस्येति'। स हि **"यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः"** इति

पूर्वमुपात्तः, अतः सन्निकृष्टत्वात्स इति तच्छब्देन तस्यैव परामर्शो न विप्रकृष्टस्येश्वरस्येति। पुरुषस्तावन्मिथ्यादर्शनागृहीतदर्शनश्चिरात्संसारमार्गे भ्रामं भ्रामं स्वकर्मोपहृतं च नरकतिर्यग्गर्भसंभवं दुःखजातमुपात्तमुपात्तं निर्वृतिमलभमानः परिश्रान्तचित्तो यदा सत्कर्मपरिपाकेण पर-

मगुरोरनुग्रहात् सर्वदुःखापक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यते । तदा तन्महिम्नैव शोकमोहप्रहाणान्निवृत्ताखिलपरिश्रमः कृतकृत्योऽसौ क नु पुनरास्ते इति जिज्ञासायामाह भगवान्मन्त्रः **'सपर्यगात्' इत्यादि** । तथा चायमस्यार्थः । यः पुरुषः शाश्वतीभ्यः समाभ्यो मिथ्यादर्शनेन सांसारिकं दुःखजातमनुभूयार्थान् मनोर्थान् "कदाहं मानुषं जन्माप्नुयां, कदा च सुकृतं कर्म कुर्यां, कदा च भगवन्तमाराध्य तदनुग्रहात्सम्यग्दर्शनमापद्येय, कदाचापद्य सम्यग्दर्शनं संसारबन्धनाद्दुःखान्मुच्येय' इत्येवंप्रकारान् याथातथ्यतो यथार्थरूपेण दृढप्रतिज्ञात इति यावत् व्यदधात् अकरोत् स भगवत्प्रसादेन प्राप्तसम्यग्दर्शनोऽकायं यथा स्यात्तथाऽव्रणं यथा स्यात्तथाऽस्नाविरं यथा स्यात्तथाऽपापं यथा स्यात्तथा शुद्धं यथास्यात्तथा पर्यगात् संसारबन्धनाद्दुःखात् परि उपरि स्वाराज्यपदवीं अगात् गतवानिति संबन्धः । तस्य च विशेषणानि । कविः क्रान्तदर्शी मनीषी मेधावी परिभूः सर्वेषां परि उपरि भवतीति परिभूः स्वयंभूः स्वतन्त्र इति । युक्तश्चायं । कस्मात् । शास्त्रान्तरसंवादात् । श्रूयते तावच्छास्त्रान्तरे यन्मिथ्यादर्शनप्रयुक्तमस्य शोकमोहादिदुःखमिति । मिथ्यादर्शनाद्ध्यसौ रागद्वेषादिदोषानुपचिनोति । दोषेभ्यश्च धर्माधर्मसंचयान् तेभ्यश्च शरीरं शरीराच्च शोकमोहादिदुःखमिति । यदा पुनरसौ कर्माणि कुर्वन्भगवत्प्रसादादात्मैकत्वदर्शनं सम्यग्दर्शनं प्रपद्यते तदा सम्यग्दर्शनादस्य झटित्येव मिथ्यादर्शनमपैति । मिथ्यादर्शनापाये च कानुरज्येत् कं वा द्विष्यादिति रागद्वेषादयो दोषा अपयन्ति । दोषापाये च धर्माधर्मसंचया अपगच्छन्ति । धर्माधर्मसंचयापगमने च शरीरमपगच्छति । तत्साधनत्वात्तस्य । शरीरापगमने पुनः शोकमोहादिदुःखमपयाति । दुःखापायश्च स्वाराज्यमिति शास्त्रस्थितिः । तत्र शास्त्रं च **न्याय अ. १–आ. १–सूत्र २.**

**"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"** इति ।

मिथ्याज्ञानं मिथ्यादर्शनं तदपायः सम्यग्दर्शनात् अपवर्गश्च जन्मदुःखात्यन्तविमोक्ष इति रहस्यम् । तथा **सामवेदीयछान्दो॰ प्र. ८–खं. १२**

**"न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"** १ इति ।

प्रियाप्रिये सांसारिके सुखदुःखे इत्यर्थः। मनुरपि। अ. १२ श्लो. ९१.

**"सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति"** इति।

**तदेवं** वाव शास्त्रान्तरसंवादेन सम्यग्दर्शनानन्तरमेवाऽशरीरस्य सतो जीवस्यैव स्वाराज्याधिगमादस्मदुक्तार्थ एव युज्यते न त्वदभिमतार्थ इति। युक्ते चास्मदर्थे नायं मन्त्रो भगवतः परमेश्वरस्य मूर्त्यभावे मानयितुं शक्यते। अपि च पूर्वमन्त्रोपात्तस्यैकत्वमनुपश्यतो विजानतः पुरुषस्यैव। उपस्थितत्वात्। उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावाच्च।

**ननू**पस्थितत्वात्प्रत्याम्नातु नाम 'स इति तच्छब्दः पूर्वमन्त्रोपात्तमैकत्वमनुपश्यन्तं पुरुषं न तत्र विवदामहे। तथापि सोऽकायं पर्यगादित्यन्वयः किं न स्यात्। अकायमिति च कर्मणि द्वितीया भगवद्विशेषणम्। न क्रियाविशेषणमिति। **न**। कल्पनागौरवप्रसङ्गात्। अकायमित्यादीनि हि विशेषणानि। तानि च भावान्वयाय विशेष्यमभ्यर्थयन्ति। विशेष्यं चाध्याहार्यमित्यध्याहारकल्पना। नपुंसकानां च तेषां पुल्लिङ्गत्वकल्पनेपि कल्पनागौरवं प्रसज्यते। प्रसज्यमानमपि कल्पनागौरवं न तद्भवदर्थं निर्वहति। भगवत्परिगतेरेवानुपपत्तेः। नहि भवत्समये मुक्तावपि जीवात्मानो भगवति लीयन्ते भगवन्तं वातिक्रमन्ते, अपि च निरन्तरमुड्डीयन्ते, किमु वाच्यं संसारवेलायामिति सर्वथापि कल्पनागौरवप्रसक्तौ न भवदुक्तं युक्तमिति सन्तोष्टव्यम्।

**भवतु** वा 'स इति तच्छब्दो भगवतः परमेश्वरस्यैव परामर्शकः, भवतु चाकायमादीनां नपुंसकानां पुल्लिङ्गत्वेन परिणामः, तथापि नायं मन्त्रो भगवतः परमेश्वरस्य सांसिद्धिकीं वा सांकल्पिकीं वा प्राकृतिकीं मूर्तिमपाकुरुते। किमुत पांचभौतिकीमिति। पांचभौतिकी च तस्य मूर्तिर्नास्माभिरप्यभ्युपगम्यते तेन तत्प्रतिषेधेऽपि न काचिद्धानिरिति किं कोलाहलेन।

**नन्व**कायमिति मूर्तिसामान्यं प्रतिषिध्यते, नच तत्र प्रतिषेधविषयात्सांसिद्धिकी वा साङ्कल्पिकी वा काचित्प्राकृतिकी मूर्तिः परिशिष्यते, न हि नञ एष स्वभावः यत्स्वसंबन्धिनं भागतः प्रतिषेधयेत्। भागतो वा प्ररिशेषयेत्। अतिप्रसंगात्। **सत्यम्** एवमेव नञः

स्वभावः तथाप्यसति प्रतिबन्धके स इति द्रष्टव्यम् । कस्मात् । सति प्रतिबन्धके स्वभावविपर्यासस्यापि दर्शनात् । दृश्यते वाव दाहकोऽपि वह्निः सति प्रतिबन्धके न दहति । दहन्वादेशतो दहति देशतो न दहति । दृश्यते वाऽनुदरा कन्येत्युदाहरणान्तरे नञ् नवावोदरमात्रं प्रतिषेधति, प्रतिषेधति च तज्जातीयं स्थूलमात्रमुदरमिति । भवति चैवमत्रापि शास्त्रं प्रतिबन्धकं । तद्धि भगवतः परमेश्वरस्य हस्तपादाद्युपन्यासेन मूर्तिं प्रतिपादयत् प्रकृतमेनं प्रतिबध्नाति । तेन प्रतिबद्धश्चायमुत्सर्गोपवादन्यायेन तद्विषयं परित्यज्य प्रवर्त्तते । तद्विषयश्च सांसिद्धिकी वा सांकल्पिकी वा प्राकृतिकी मूर्तिर्न मूर्तिमात्रमिति सत्यपि प्रतिषेधे न कश्चिद्दोषः । प्रतिषेधस्य तस्य पांचभौतिकमूर्तिविषयत्वात् । प्रतिबन्धकस्य च तद्भिन्नगोचरत्वात् । तथाच प्रतिबन्धकं शास्त्रम् । **यजु. अ. १६–मं. १–२.**

**"नमस्ते रुद्र मन्यव उतोत इषवे नमः**
**बाहुभ्यामुत ते नमः" ॥ १ ॥**

**"या ते रुद्र शिवा तनू रघोराऽपापकाशिनी ।**
**तया नस्तन्वा शन्तमया गिरिशंताभिचाकशीहि" २**

कृष्णयजु. तै. आ. प्रका. १०–अनु. १८ मं. १

**"नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमोनमः"**

सा. छां; प्रपा. १. खं.

**"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः"**

वेदा. अ. १. पा. १ सू. २०.

**"अन्तस्तद्धर्मोपदेशात्" ।**

किमत्राधिकेन । यदा वाव सांसिद्धिकानि वा सांकल्पिकानि वा प्राकृतिकानि नानारूपाणि लौकिकानि वाऽलौकिकानि वा भगवतः परमेश्वरस्य वेदेषु, श्रूयन्ते तदा का कथैकस्या मूर्तेरिति । यदाह भगवान्मत्रः ।

**अथर्व. काण्ड. १० अ. ४ मं. २७**

"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्व-
तोमुखः" इति।

यजु. अ. ३२. मन्त्र १.

"तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः" इति।

तस्मात्सिद्धं भगवन्मूर्त्यापादकशास्त्रबाहुल्योपलब्धेः प्रतिबद्धशक्तिकोऽयं याजुषो मन्त्रो न सहसा भगवन्मूर्तिमात्रं प्रतिक्षेप्तुमर्हति, किंतु तद्विषयमपहाय शेषभूतां पांचभौतिकीं मूर्तिमिति। युक्तं चैतत्। अन्यथा "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्वेताश्वतरशाखिनां भगवतः परमेश्वरस्य पाणिपादादिप्रतिषेधेन जवनत्वाद्यभिधानं न सङ्गच्छेत। नहि यस्य पाणिपादौ न स्तः स कथंचित् जवनो वा ग्रहीता वा भवितुमर्हति। यस्य वा चक्षुःश्रोत्रे न विद्येते स कथंचिद्द्रष्टा वा श्रोता वा भवितुं पारयते। पठ्यते तु 'जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति। तस्मान्मन्तव्यं भौतिकविग्रहविषयोऽयं प्रतिषेधो विधिस्त्वभौतिकविग्रहविषय इति। तथाच विमलं सर्वमिति कृतं बहूक्तेन॥ नापि.

श्वेता अ. ६ मं. ८

"न तस्य कार्यं करणं च विद्यते। न तत्सम-
श्चाभ्यधिकश्च दृश्यते। परास्य शक्ति-
र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"

इति मन्त्रः प्रमाणम्। किं कारणम्। शरीरवाचकपदानुपलब्धेः। नह्यत्र शरीरवाचकं पदमुपलभ्यते। येन तत्प्रतिषेधोऽप्यध्यवसीयेत। यस्य यत्राभावोऽस्ति तस्य तत्र कल्पनं वाव केनानुसन्धीयेत केन वा तत्र न संशीयेत। नच वाच्यं कार्यं शरीरं करणमिन्द्रियाणीति। शब्दशास्त्रानवबोधात्। नूनं वः शब्दशास्त्रानवबोधः अत एवास्यार्थं न जानते। नह्यस्यायमर्थो यथावबुध्यते। किं तर्हि। यस्य भगवतः परमेश्वरस्याघटनघटनाप-

१ श्वेताश्व. अ. ३ मं. १९.

टीयसी मायाशक्तिः परमदक्षा सर्वोत्कृष्टा निखिलकार्यैकर्त्री नित्यं विजेजीयते, न तस्य किंचित्कार्यं कर्तव्यं वा, करणं क्रिया वा काचिद्विद्यतेऽवशिष्यते। सुयोग्ये मन्त्रिणि नृपतेरिव। शक्त्यैव तया सर्वकार्यनिर्वर्तनात्। अतएव न तत्समश्चाभ्यधिकश्च दृश्यते कश्चित्। जीवाजीवभेदस्येदृक्शक्त्यभावेनानीदृक्त्वात्। सा चास्य परा शक्तिर्वेदेषु श्रूयते स्वाभाविक्येव न नैमित्तिकी। विविधकार्यैकर्त्रीत्वाच्च विविधा। ज्ञानं सत्त्वं प्रकाशकत्वात्। क्रिया रजः चालकत्वात्। बलं तमो नियामकत्वात्। तेषां साम्यावस्थारूपा इत्यर्थः। नचास्मादर्थात्कथंचिद्भवदिष्टं सेद्धुमर्हति। चेदाग्रहात् कार्यं शरीरमिति निरूप्यते, तदोक्तैव व्यवस्थेति न कश्चिद्दोष इति॥

**एते**नान्येऽपि मन्त्रा व्याख्याता द्रष्टव्याः। तथाच भवदभिमतमन्त्राणामीश्वरमूर्त्यभावाप्रतिपादकत्वाच्छब्दस्तत्र प्रमाणमिति भवत्प्रलापोऽपि बालधीनां व्यामोहनमात्रमेवेति निर्विघ्नं निर्वृत्तम्॥ ३॥

**यत्र वेदं वचः प्राहुर्हरेर्वैशेषिकादयः।**
**तत्र किं तैः समाधेयं निराकारैकवादिभिः॥ १॥**
**नहि मूर्तिं विना वचनं वेदानामुपपद्यते।**
**तस्माद्वेदा न ते मानं मानेव्याघातदूषणम्॥ २॥**

**तदेवं** प्रत्यक्षादिप्रमाणानां भगवन्मूर्त्यभावासाधकत्वात् तन्मूर्तिमत्त्वस्य च तत्रतत्रोपपादितत्वात् भगवन्मूर्तेरिव मूर्तेः प्रतिकृतेरिति यावद् या पूजा सा मूर्तिपूजेति तुरीयो निर्वचनार्थः सूपपन्न इति माध्यस्थ्येन निर्द्धारणीयं, नच तत्र विप्रतिपदनीयमित्यलं बहूपपादनेन मनस्विषु तत्त्ववित्सु॥

**स्यादेतत्।** माभूवन्नक्षादीनि प्रमाणानि वाव भगवन्मूर्तेरभावस्य साधकानि, भवतु च शक्योपपादा भगवन्मूर्तिः। तथापि निर्वचनार्थो नोपपद्यते। किं कारणम्। तन्निरूपणासंभवात्। तदा हि निर्वचनार्थ उपपद्येत, यदा भगवन्मूर्तिनिरूपणं वाव संभवेत्। नच तत्संभवति। कस्मात्। विकल्पासहत्वात्। तथाहि, येयं भगवन्मूर्तिस्तावदभ्युपगम्यते सा खलु योनिजा वा स्यात् अयोनिजा वा स्यादिति वक्तव्यम्। तत्र योनिजा चेदुच्यते, तदा प्रश्नधाराया अविश्रान्तेरनवस्था प्रसज्येत। अयोनिजा चेदुच्यते, तदा निरूपयितव्यं भौतिकी वा स्यात्प्राकृतिकी वा स्यादिति।

भौतिकी चेन्निरूप्यते, तदा भूतोत्पत्तेः पूर्वं न सिध्येत्, अस्मदादितुल्या- चासज्येत, सातु नेष्टा । प्राकृतिकी चेत्तदा न सा कस्यापि दृष्टिपथमा- गच्छेत् । नहि प्रकृतिर्वा तद्विकृतिर्वा साक्षात् कचिद् दृश्यते । दृश्यते त्वियं साक्षादिति मूर्त्यर्चकास्तावन्मन्यन्ते । तस्मात्सर्वथाऽशक्यनिरूपणा भगवन्मूर्तिरित्यनुपपन्नो निर्वचनार्थः ।

**अत्र ब्रूमहे** । न वावाशक्यनिरूपणा भगवन्मूर्तिः, अपिच सर्वथा शक्यनिरूपणेति । सा हि न योनिजाभ्युपेयते किमुताऽयोनिजा । अयो- निजाऽपि सा न भौतिकी किमुत प्राकृतिकीति । प्राकृतिक्यपि न साऽसां- सिद्धिकी किमुत सांसिद्धिकी वा सांकल्पिकी वेति न किंचिद्दूषणम् । न- चासिद्धत्वं । शास्त्रसिद्धत्वात् । तथाहि शास्त्रम् **सांख्य. अ. ५–सू. १११.**

**"ऊष्मजाण्डजजरायुजोद्भिज्जसांकल्पिकसां- सिद्धिकं चेति न नियमः"** इति ॥

तत्र शरीरं मूर्तिरिति शेषो द्रष्टव्यः । तच्चाण्डजं जरायुजमुद्भिज्जमिति त्रिविधमेवेति न नियमः किंतूष्मजादिभेदात्षड्विधं शरीरं भवतीति सूत्रार्थः । **भगवत्पादा महर्षिकणादास्तु** सांकल्पिकादिप्राकृतिकशरीराणा- मयोनिजेष्वन्तर्भाव्ययोनिजायोनिजभेदाद् द्विविधं शरीरं सूत्रयामासुरिति न कश्चिद्विरोधः । विवृतं चैतत्पृथिवीनिरूपणवेलायां प्रशस्तपादाचार्यैर्भाष्ये ।

**"शरीरं द्विविधं योनिजमयोनिजं च । तत्रायोनिजम- नपेक्ष्य शुक्रशोणितं देवर्षीणां शरीरं धर्मविशेषसहिते- भ्योऽणुभ्यो जायते । क्षुद्रजन्तूनां यातनाशरीराण्यध- र्मविशेषसहितेभ्योऽणुभ्यो जायन्ते । शुक्रशोणितसन्नि- पातजं योनिजं । तद्द्विविधं जरायुजमण्डजं च । मानु- षपशुमृगाणां जरायुजं । पक्षिसरीसृपाणामण्डजम्"** इति । तत्र **देवर्षीणां** देवस्य परमात्मनः, ऋषीणां मन्वादियोग- र्षीणां चेत्यर्थः ॥

ननु शास्त्रसिद्धत्वान्माभूदन्यद्दूषणम् । तथापि प्राकृतिकित्वान्न सा दृष्टि- पथमागच्छेदित्युक्तम् । सत्यमुक्तम् । किंतर्हि । नैतद्दूषणम् । किं कारणम् । यत्कारणं नास्माभिरपि भगवन्मूर्तिः सुखदर्शाऽऽस्थीयते, किमुत, यतताम-

प्यतिशयेन दुर्दर्शेति । स हि यतमानः कल्याणसन्दोहिनीं पुण्यतमां भगवन्मूर्तिं द्रष्टुं स्प्रष्टुं वा शक्नोति । यः कश्चित्कथंचित्पुण्यौघपरिपाकादेकपदे जगद्वासनां परिमुच्यानन्यचेताः सन् यथाशास्त्रं भगवन्तं वासुदेवं चिरमुपास्ते। भगवाँश्च भक्तवत्सलस्तद्भक्तियोगेन नितान्तार्द्रहृदयोऽशक्यं तत्पुरुषकारमालक्ष्य सपदि तमनुगृह्णीते नान्यथेति । तथाचोक्तं मुण्डके **मु० ३ खं० २.**

**"नायमात्मा प्रवचनेन लभ्यो न मेधया न**
**बहुना श्रुतेन ॥ यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनुं स्वाम्"** इति ।

यमनन्यचेतसं भक्तं नान्यचेतसमेष परमात्मा वृणुतेऽनुगृह्णीते मदीयमिति, तेनानन्यचेतसा लभ्यो दर्शनीयो नान्येन । यतः तस्यैव तंप्रत्येव एष आत्मा परमात्मा स्वां स्वकीयां तनुं मूर्तिं विवृणुते निरावृणुते दर्शयतीति यावदित्यर्थः । अनूदितं चैतद्भगवता भगवद्गीतायाम् । **तद्यथा० अ० ११ श्लो० ५२ ५३—५४—५५—**

**"सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**
**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥**
**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥**
**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव"** ५५ इति ।

तस्मादकिंचिदेतत् । "यन्न दृष्टिपथमागच्छेदिति" । तस्याः स्वभावत एव दुर्दर्शत्वाभ्युपगमादित्यलं तत्प्रसङ्गेन बहुना ॥

**स्यादेतत्** माभूदशक्यनिरूपणा भगवन्मूर्तिः । स्याच्च तया मूर्तिमानीश्वरः । तथापि तत्प्रतिकृतौ किं मानं, येन निर्वचनार्थ उपपद्येत । नह्यन्तरेण मानं किंचिदुपपद्यते । तस्मान्मानं वक्तव्यम् । किंतन्मानमिति । **सत्यं,** मानं वक्तव्यं । परंतु किं तन्मानमपेक्षितम् । प्रत्यक्षं वाऽनुमानं वा

शब्दो वेति । प्रत्यक्षं चेदपेक्षितं । अस्त्येव । सहस्रसंख्यानां भगवन्मूर्तिजातीयानां तत्प्रतिकृतीनां तत्तद्देवागारेषु साक्षादुपलभ्यमानत्वात् । अनुमानं चेत्तदपि न दुःशकम् । अपि च सुतरां सुशकम् । अस्मदादिमूर्तिप्रतिकृतेरिव भगवन्मूर्तिप्रतिकृतेरपि शक्यानुमानत्वात् । शब्दश्चेत् सहर्षमाकर्ण्यतां तद्यथाह तत्रभवान्वेदः । **अथर्व० कां० २ अनु० १३ मं० ४.**

**"एहि अश्मानमातिष्ठ अश्मा भवतु ते तनुः ।**
**कृण्वन्तु विश्वेदेवा आयुष्टे शरदः शतम्"** । इति ।

तत्राश्मानं पाषाणं मनुजाकारं वाऽमनुजाकारं वा लिङ्गाकारं वाऽलिङ्गाकारं वा मूर्तिभेदमातिष्ठ । सोऽयमश्मा ते तव तनुः शरीरमिव शरीरं मूर्तिरिति यावत् भवतु भवतादित्यर्थो बोद्धव्यः । न केवलमाश्म्येव तत्प्रतिकृतिः कर्तव्येति नियमः । किमुत । यथासामर्थ्यं मार्तिक्यपि । तद्यथोक्तं शतपथे **कां० ११ अ० १ ब्रा० २ कं० १०-११.**

**"मूर्तिनिर्माणाय तां वल्मीकवपां परिगृह्णाति १० मूर्तिनिर्माणाय वराहविहतां मृदं परिगृह्णाति ११ " इति ।**

तत्र परिगृह्णातीति विधिप्रयोगः । तेन परिगृह्णीयादिति तस्य वाच्योऽर्थः । **नच** वाच्यं तत्प्रतिषेधोऽपि श्रूयते । तद्यथा **(यजु० अ० ३२ मं० ३.)**

**"न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः"** इति ।

प्रतिषेध **इति** । तत्र प्रतिमाशब्दस्योपमानार्थकत्वेन प्रतिकृत्यर्थकत्वाभावात् । तदा हि वाव तत्प्रतिषेधः स्यात् यदा तत्रत्यः प्रतिमाशब्द उपमानार्थको न स्यात् । प्रतिकृत्यर्थकश्च स्यात् । न चात्र प्रतिकृत्यर्थकः प्रतिमाशब्द इति वक्तुं शक्यते । किं कारणम् । अनुपयोगात् । लोके वा वेदे वा स एवार्थः कर्तव्यो भवति । यश्च स्वरूपतो वा भावतो वा वाक्यार्थेनोपयुज्येत । यश्च वाक्यार्थेन नोपयुज्यते स च कृतोऽप्यर्थोऽनर्थ एव भवति । न वावार्थ इति । तद्यथा देवदत्तीयपाकशालायां पाकोपक्रमे सैन्धवप्रयोगे सैन्धवोऽश्व इति कृतोऽप्यर्थोऽनर्थ एव, लवणं चार्थ इति । एवमन्यत्रापि विज्ञातव्यं । यस्य वाव भगवतो वासुदेवस्य नाम इति प्रसिद्धं महद्यशोऽस्ति तस्य प्रतिमा नास्ति प्रतिकृतिर्न भवति इति न तथोपयुज्यते । यथा तत्सदृशो नास्तीत्युपयुज्यते । नहि प्रतिकृत्यभावो वाव कथंचिद्यशोमहत्वे कारणायते । महायशस्विनामार्य्यमहोदयानां

प्रतिकृत्यभावो वा लोके क्वचिदनुभूतायते । प्रत्युतानुभूयन्ते तु यशस्विनामपि महाजनानांतेषां राज्ञां च सहस्रशः प्रतिकृतय इति । नचैकान्तवादोऽयं । परमिह तदनुपयोग इत्यवश्यमाचक्ष्महे । तस्मादत्रोपमानार्थकः प्रतिमाशब्दो न प्रतिकृत्यर्थक इति । तेन न तस्य भगवतः परमेश्वरस्य कश्चित्सदृशोऽस्ति यस्य नामेति प्रसिद्धं महद्यशोऽस्तीति युक्तमापद्यते । प्रयोगान्तरेष्वपि तथा दर्शनात् । न च केवलमिहैव, किमुत, प्रयोगान्तरेष्वपि प्रतिमाशब्द उपमानार्थको दृश्यते । तद्यथा वनवासप्रकरणे वाल्मीकीयरामायणे अ– **"सतन्नियोगात्खलु सत्यवादी सत्यां प्रतिज्ञां नृप पालँयँस्ते। इतो महात्मा वनमेव रामो गतः सुखान्यप्रतिमानि हित्वा"** इति ।

महाभारते च नलप्रकरणे ।

**"रूपेणाप्रतिमो भुवि"** इति ।

तथाच न भगवत्प्रतिकृतिप्रतिषेधोऽयम्, अपि चोपमानप्रतिषेध इति न किंचिदवद्यम् ।

**एतेन** सामवेदीयतलवकारोपनिषत्प्रथमखण्डस्थाः

**"यद्वाचानभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ १ ॥**
**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" ॥ २ ॥**

इत्यादिमन्त्रा अपि व्याख्याता वेदितव्याः । तत्रापि यदिदमुपासते तद्ब्रह्म न, किं तु तत्प्रतिकृतिरियमित्यर्थकत्वाददोष इति कृतं पल्लवैः ॥

**स्यादेतत्** । अस्तु मूर्तिमानीश्वरः, भवतु च तत्प्रतिकृतिराश्मी वा मार्तिकी वेति न निर्बन्धः । परं तदुपासनं वा पूजनं वा किमर्थं । नहि प्रकृतितत्कार्ययोरुपासनं वा पूजनं वा कल्याणाय कल्पते । येन प्रकृतिकार्यभूता तत्प्रतिकृतिरप्युपासिता वा पूजिता वा कल्याणावहा स्यात् । अकल्याणावहा च न स्यात् । अस्ति चैषाऽकल्याणावहा न जातु कल्याणावहेति । किं कारणम् । यत्कारणमाह भगवान्मन्त्रः **यजु० अ० ४० मं० ९.**

**"अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।**
**ततो भूय इव ते तमो य उ संभूत्याँरताः"** इति ।

तत्रासंभूतिं प्रकृतिं, संभूत्यां प्रकृतिकार्यभूतायां मूर्तौ, रताः विविधार्चाचारैः प्रीतिमन्त इत्यर्थः ।

**ननु** प्रकृतिकार्यभूतापि भगवन्मूर्तेः प्रतिकृतिरियं मूर्तिः, भगवन्मूर्तिश्च पुण्यतमतया सर्वकल्याणावहत्वात् पूज्यतमेति निरपवादम् । तत्प्रतिकृतित्वाच्चैषा मूर्तिरपि तथेति शक्यनिर्वचनमिति । **न** । तथाप्यनुपपत्तेः । पूजनं हि पत्रपुष्पादिभिः सत्करणं, तन्नो घटते । किं कारणम् । सत्कार्यानुपलम्भात् । न वावात्र सत्कार्यो भगवान् । तस्य स्वतः सत्कृतत्वेन सत्कार्यत्वाभावात् । तदीयैस्तैस्तत्सत्कारासंभवाच्च । नापि सत्कार्या मूर्तिराश्मी वा मार्त्तिकी वा । नित्यासत्कृतायास्तस्याः सुतरां तदभावात्फलाभावाच्च । किं च तत्र विविधभोगप्रयोजनम् । भगवत्क्षुत्पिपासोपशमो वा मूर्तिक्षुत्पिपासोपशमो वा । सर्वथापि तदनुपपत्तिरेव । एवमन्यदप्यूहनीयमिति । **अत्रोच्यते** । सत्यं सत्करणमर्चनम् । तच्च नः स्वतः सत्कृतस्य भगवतः परमेश्वरस्यैव नान्यस्य कस्यचिदसत्कृतस्य।तस्य तादृक्सत्कारानर्हत्वात् । भगवाँश्चास्माकं चर्मचक्षुषामलभ्यप्रायत्वात्सहसा सत्कर्तुमशक्य इति तत्सच्चिकीर्षूणामस्माकं तत्प्रतिकृतिसत्करणमेव तस्य सत्करणं नान्यत्किंचित् । मूर्तिश्च स्वरूपतोऽसत्कृताऽपि भगवन्मूर्तिप्रतिकृतित्वात्सुतरां सत्कर्तुमर्हेति न सत्कार्याऽनुपलम्भः। नृपतीनां प्रतिकृतेरिव भगवतः प्रतिकृतिमूर्तेरपि सत्कार्यत्वसंभवात् । तस्य सत्करणं च भावयुक्तेन चेतसा पत्रपुष्पादिभिर्विविधोपचारैरेवेति न काचिदनुपपत्तिः। तत्सत्करणेनैव भगवतः परमेश्वरस्यापि सत्करणस्य युक्ततरत्वात् । अत एवोक्तं भगवता भगवद्गीतायाम् । **तद्यथा अ० ९ श्लो० २६.**

**"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**
**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्"** ॥२७॥ इति ।

एतेन तदीयैस्तैस्तत्सत्कारासंभवो विविधभोगानुपपादश्च प्रत्युक्तो वेदितव्यः । कस्मात् । तत्रार्चकानां भावातिशयस्यैव मुख्यत्वात् । पत्रपुष्पादिभोगान्तानां च तत्प्रकारत्वात् ।

नापि भगवन्मूर्तेरिव मूर्तेः प्रतिकृतेरिति यावदुपासा वा पूजा वा कल्याणावहा न भवतीति शक्यनिरूपणम् । तदुपासापूजयोरपि भगवदुपासा-

पूजात्वेन सफलत्वात्। चेद्वयं मूर्तिमात्रमुपासीमहि तामेव च यजेमहि तदा न किंचित्फलं लभेमहि प्रत्युताभद्रं चापद्येमहि। नच वयं मूर्तिमात्रमुपास्महे मूर्तिमात्रं वा यजामहे किमुत पुण्यतमां भगवतः परमेश्वरस्य मूर्तिमिति। तत्रोपासापूजयोस्तु मूर्त्युपाश्रयो भगवानीश्वर एव विषयो नान्यः कश्चिदिति सर्वं निर्दुष्टम्।

किञ्च भो ये चास्माकीनास्तत्रत्याः प्रार्थनाश्लोकाः। तद्यथा

**अथर्व० कां० १० प्र० २३ अनु० ४ मं० ३२.**

**"यस्य भूमिः प्रमान्तरिक्षमुदरम्।**
**दिवं यश्चक्रे मूर्द्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः" ३२**

यजु० अ० १६ मं० ४१.

**"नमः शम्भवाय च मयोभवाच च**
**नमः शङ्कराय च मयस्कराय च।**
**नमः शिवाय च शिवतराय च" ॥ ४१ ॥**

श्वेताश्वतरोप० अ० मं० १८.

**"यो ब्रह्माणं विद्धाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै**
**तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" १८.**

ऋ० मं० १० सू० १२१ मं० १०.

**"प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्"**

यजु० अ० ३ मं० ६.

**"त्र्यम्बकं यजमाहे सुगन्धिं पुष्टिवर्धनम्।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।**
**त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्।**
**उर्वारुकमिव बन्धनादितो मुक्षीय मामुत" ॥ ६० ॥**

यजु० अ० ३० मं० ३.

**"विश्वानि देवसवितर्दुरितानि परासुव।**
**यद्भद्रं तन्न आसुव"**

यजु० अ० ३२ मं० १४.

"यां मेधां देवगणाः पितरश्चोपासते।
तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा" १४
यजु० अ० १९ मं० ९.

"तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यं मयि धेहि
बलमसि बलं मयि धेहि ओजोऽस्योजो मयि धेहि
मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि"९
यजु० अ० ४० मं० १६.

"अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम" १६
गीता० अ० ११ श्लो० ३८–३९–४०.

"त्वमादिदेवः पुरुषः पुराणः
त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः" ॥ ४० ॥

"त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देव देव ॥ १ ॥

संसारसन्तापनिपातितानां
मोहप्रमादेन विमोहितानाम् ।
दुःखार्णवप्लावितजीवितानां
त्वमेव नस्तत्परमावलम्बनम् ॥ २ ॥

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितं
तस्मात्त्वां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥ ३ ॥

करचरणकृतं वा कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जयजय करुणाब्धे सच्चिदानन्द विष्णो ॥ ४ ॥

सेवापि कर्तुं नहि शक्यते मया
महाधमोऽहं हत पुण्यलेशः ।
स्वतो महिम्ना मयि संविधत्स्व
दयां यतोऽसि त्वमनाथनाथः" ॥ ५ ॥ इति ।

नहि ते मूर्तिमात्रोपासायां वा पूजायां वा कथंचिदुपयुज्यन्ते । तस्य तदयोग्यत्वात् । पुण्यतमा भगवतः परमेश्वरस्य मूर्तिस्तु सर्वथा तद्योग्येति भावातिशयेनोपासिता वा पूजिता वा नियमेन कल्याणावहा स्यात्, न स्यादकल्याणावहेति निश्चेतव्यम् । नच तत्र विप्रतिपत्तव्यं । प्रत्यङ्ग कमनीयत्वात् ॥

ननूक्तम् "अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते"
इति प्रकृतितत्कार्ययोरुपासापूजयोस्तावदन्धतमसावहत्वमिति । न । वच्च-
नामात्रत्वात् । नह्ययं मन्त्रो भगन्मूर्तिभूतयोः प्रकृतितत्कार्ययोरुपासां वा पूजां
वा तमःफलकामाह । तत्र तद्वाचकपदानुपलब्धेः । अपिच स्वतन्त्रयोस्तयोरुपसां-
वा पूजां वेति । तच्चास्माभिरपि मन्यते । न तत्र कश्चिद्विवाद इति । यदा
ह्येते भगवन्मूर्तितयोपासिते वा पूजिते वा संप्रतिष्ठेते । तदा नूनं ते तमःफ-

लके नावकल्पेते । किमुत । भगवन्मूर्तिजातीयत्वाद्विशिष्टफलके इति । किं कारणम् । यत्कारणमाह तत्रैव स्वयं भगवान्मन्त्रः **यजु. अ.४०मं.११.**

**"ऽसंभूतिं च विनाशं च यस्तद्वेदोभयँसह ।**
**विनाशेन मृत्युं तीर्त्वाऽसंभूत्याऽमृतमश्नुते"**॥११॥ इति ।

यः पुरुषोऽसंभूतिम् अजां प्रकृतिं, विनाशं च विनाशशीलं तत्कार्यं च, तदुभयं तदेतत् प्रकृतितत्कार्योभयं, सह भगवद्बुद्ध्या सह भगवन्मूर्तितयेति यावद्, वेद उपास्ते पूजयते वा, स विनाशेनासंभूत्या च भगवन्मूर्तितया प्रकृतितत्कार्योपासनया च तत्पूजनयाच पारम्पर्येण ज्ञानस्य निष्पत्तौ मृत्युम् अज्ञानलक्षणं मृत्युं तीर्त्वा परिलंघ्यामृतं जन्ममरणाभावलक्षणं भगवत्प्राप्तिरूपं मुक्तिपदमश्नुते प्राप्नोतीति मन्त्रार्थः । यथा चैतत् तथा साङ्ख्ये भगवान् कपिलाचार्योऽपि सूत्रयाञ्चकार । तद्यथा तस्य तत्रत्यं सूत्रम् । **अ० ४ सू० २१.**

**"अध्यस्तरूपोपासनात्पारम्पर्येणयज्ञोपासकानामिव"**इति।

सिद्धिरिति पूर्वसूत्रादनुषज्यते । अध्यस्तरूपैः मूर्तिविशेषैः पुरुषाणां ब्रह्मविष्णुहरादीनामुपासनाद्वा पूजनाद्वा पारम्पर्येण ब्रह्मादिलोकप्राप्तिक्रमेण सत्त्वशुद्धिद्वारा वा ज्ञाननिष्पत्तिर्न साक्षात् । तया च निरूढमज्ञानमतिक्रम्य निःश्रेयसाधिगमो यथा याज्ञिकानामिति सूत्रार्थः । तथाच भगवन्मूर्त्तेरुपासका वा पूजका वा नान्धं तमः प्रविशन्ति किमुत **(गी. अ. ७ श्लो.१४)**

**"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"** ॥ १४ ॥

इत्यज्ञानमुल्लङ्घ्य निर्विशङ्कं भगवन्तमाविशन्तीति मुक्त्यर्थकं तदुपासनं वा पूजनं वा न निरर्थकं नाप्यमुक्त्यर्थकमिति युक्तमापन्नम् । अतएवोक्तं यजुर्वेदिनामुपनिषदि प्रजापतिवालखिल्यसंवादे । **तद्यथा प्र० ४ कं० ४.**

**"अग्निर्वायुरादित्यः कालः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुरिति, एकेऽन्यमभिध्यायन्ति, एकेऽन्यं, श्रेयः कतमो, यः सोऽस्माकं ब्रूहीति, तान् होवाच ब्रह्मणो वावैता अग्र्यास्तनवः परस्यामृतस्याशरीरस्य, तस्यैव लोके प्रतिमा**

**उदति, इह यो यस्यानुषक्त इति एवं ह्याह ब्रह्म खल्विदं वाव सर्वं, या अस्या अग्र्यास्तनवस्ता अभिध्यायेत् अर्चयेत्''** इति।

तदेवं वाव भगवन्मूर्तेरिव मूर्त्तेः प्रतिकृतेरिति यावत्पूजाया वेदशास्त्रादिसिद्धत्वेन निःश्रेयसाधिगमहेतुत्वनिश्चयादुपपन्ने निर्वचनार्थे बहुसत्करणीयोऽसौ मूर्तिपूजानिषेधको निराकारैकवावदूक इति निरुक्ता मूर्तिपूजा मूर्तिपूजा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यश्रीमदात्मारामभगवत्पाद-
शिष्यपण्डितस्वामिहरिप्रसादकृतौ मूर्तिपूजा समाप्ता ॥



| ☞ पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८४ | २७–२८ | उपात्तमुपात्तं | उपायमुपायं |

## भूमिकायाः शुद्धिपत्रम् ।

| पत्राङ्कः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २६ | मार्तण्डः | मार्तण्ड |
| ४ | २० | तत्रभवेद | तत्रभवद |

## मूर्तिपूजायाः शुद्धिपत्रम् ।

| पत्राङ्कः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १३ | ध्यानविदो | ध्यानविदा |
| २ | १४ | माचक्षते | माचक्ष्यते |
| ८ | ८ | कुटी–प्रभा | कुटीप्रभा |
| ९ | २५ | वा | पा |
| १९ | २६ | यथाह | यथा ह |
| २४ | २१ | समर्थ | समर्था |
| २४ | २२ | कथं | किं |
| २४ | २२ | कथंवा | किंवा |
| ४४ | २८ | विक्रियेत | विकुर्वीत |
| ४४ | २८ | विक्रियमाणश्च | विकुर्वाणश्च |
| ४५ | २ | आत्मानं | आत्मना |
| ६२ | १४ | रम् | रन् |
| ८० | २९ | दिऽष्टोपि | दिष्टोऽपि |
| ८४ | २७–२८ | उपात्तमुपात्तं | उपायमुपायं |
| ९३ | ९ | पालॅंस्ते | पालयँस्ते |

क्वचित्तकारस्य द्वित्वमद्वित्वं तु स्वयमूह्यम्